आसीदबहुलमुत्कृष्टं समृद्धं तस्य साधनम् ।
नूतने भवने चास्मिन् पठनं लेखनं तथा ॥ ६६ ॥

समन्ततो निर्जनेषु स्थलेषु गह्वरेषु सः ।
गत्वा समाचरद् ध्यानं दीर्घकालमतन्द्रितः ॥ ६७॥

चरन् प्रदक्षिणाकार एकदा भवनाद्बहिः ।
सर्वतो हनुमद्रूपं पुरतोऽक्ष्णोर्ददर्श सः ॥ ६८ ॥

पृष्टस्तु कारखानीसैर्यद्दृष्टं तदवेदयत् ।
अयन्तिर्मारुतेरद्य दर्शनं सुष्ठु तेऽब्रुवन् ॥ ६९ ॥

अम्बरं निखिलं शेषफणामण्डलराशिभिः ।
व्याप्तमेवाद्भुतं दृश्यमपश्यदन्यदेकदा ॥ ७० ॥

ज्ञानेश्वरतुकारामादिकानां भक्तिवाङ्मयम् ।
आदेशं प्राप सोऽध्येतुं ध्याने तु पुनरेकदा ॥ ७१ ॥

भक्तिस्तु द्वैतमूलैवाद्वैते भक्तेरसंभवः ।
एवमस्ति मतं केषां भक्तिशास्त्रविदां किल ॥ ७२ ॥

नाचिवार्योऽद्वैतभक्त्योर्विरोधो विद्यते कदा ।
इत्येवं मतमन्येषां तत्त्वज्ञानां च सूरिणाम् ॥ ७३ ॥

रामभद्रस्य चित्तेऽपि शङ्कासीदेवमुत्थिता ।
कथमद्वैतभक्त्योश्च साहचर्यं भवेन्ननु ॥ ७४ ॥

तत्त्वज्ञानां च ग्रन्थानां भक्तिशास्त्रविदां तथा ।
ज्ञानेश्वरादिसाधूनां सुसूक्ष्माध्ययनेन च ॥ ७५ ॥

संप्रदायगुरूणांच प्रमाणवचनैस्तथा ।
स्वतोहि दिव्यानुभवैस्तस्य शङ्का निराकृता ॥ ७६ ॥

साधनेऽध्यापनेऽभ्यासे कालमेवं स यापयन् ।
शीतज्वरेण सहसा पुनरपीडितोऽभवत् ॥ ७७ ॥

अतः शरीरस्वास्थ्यर्थं जम्बुखिण्डीं जगाम सः ।
मासत्रयाधिकं कालं ततः पुण्यपुरीं ययौ ॥ ७८ ॥

ज्ञानेश्वरीदासबोधसप्ताहानकरोद् बहून् ।
तेनैकदाप्यकदानमध्यात्मभवने कृतम् ॥ ७९ ॥

ज्वरस्तथापि नामुञ्चत्तेन संपीडितः पुनः ।
अत्रस्थापचनेनापि प्राप दुर्बलतां तनोः ॥ ८० ॥

एवं सत्यपि रामोऽगात् पाण्डुरङ्गपुरं प्रति ।
श्रूयते तत्र तस्याभूत् साक्षात् विठ्ठलदर्शनम् ॥ ८१ ॥

तथाचशंकराचार्यस्योत्सवे कुवलीपुरम् ।
दातुमेकं च व्याख्यानं ग्रीष्ममासेऽपि सो ययौ ॥ ८२ ॥

व्याधिर्वृद्धिंगतस्तेन शरीरं ज्वरपीडितम् ।
अभवत् कृशमत्यन्तं भेषजं तु निरर्थकम् ॥ ८३ ॥

कार्यं ममाध्यायनस्यापि दुष्करं तमभूत्तदा ।
अमात्तु नगरीं पुण्यां तस्मै प्रसित्तुमुत्थिताम् ॥ ८४ ॥

एकदा कारखानीसमध्यात्मभवमाद्बहिः ।
इतस्ततो हि पदयन्तं दृष्ट्वा रामस्तमब्रवीत् ॥ ८५ ॥

अंतर्याहि कुरु ध्यानं वहिः पश्यसि किं वृथा ।
व्याप्तमेव वहिः सर्वमशुचित्वेन सर्वथा ॥ ८६ ॥

गुरुर्व्याधिना चाधिना त्रस्त एवं
दृढो निश्चयो मानसे तस्य जातः ।
स्ववृत्तेर्विरामं गृहीत्वाल्पकालम्
प्रयातुं गुरोर्मङ्गलां हिंचगेरीम् ॥ ८७ ॥

इति वामनविरचित श्रीगुरुदेवकथामृते प्राध्यापनकालस्य तथाप्त
जनविरहस्य वर्णनं नामाष्टमःस्तरङ्गः ।

# नवमस्तरङ्गः

ध्येयप्राप्तिर्वाथ देहस्य मुक्तिः
रामो ययौ निश्चयात् हिमगेरीम् ।
सहानयत् मृत्युपत्रं तथा स्वम्
भूत्वा निराशो यत जीवितस्य ॥ १ ॥

हस्तेऽम्बुरावस्य वै मृत्युपत्रम्
दत्त्वोपरि स्वाक्षरीं तस्य कर्तुम् ।
साक्ष्यस्वरूपां कृपयैव रामः
तं प्रार्थयामास विनीतवाचा ॥ २ ॥

अङ्गीचक्रे नार्थनामम्बुरायः
उक्त्वा कृतं सद्गुरुणा भविष्यम् ।
जीवेद् विना संशयं रामचन्द्रः
आपष्टि वर्षं कृपयेश्वरस्य ॥ ३ ॥

यमनाक्का नाम तस्य पितृव्यदुहिताभवत् ।
स्वशुश्रूषार्थमानीता तेन सा गतभर्तृका ॥ ४ ॥

नूनं चकार सा साध्वी रामस्य भ्रातुरात्मनः ।
ततः परं दीर्घकाले शुश्रूषां मातृवत् किल ॥ ५ ॥

अस्मिन् काले रामभावोर्दयनीया तनुस्थितिः ।
आसन्नमरणावस्था चर्ममात्रशरीरकः ॥ ६ ॥

यष्ट्याधारं विना रामोऽभवच्चरितुमक्षमः ।
आहारः केवलं दुग्धं तदप्यल्पं दिनेऽखिले ॥ ७ ॥

स्वजनानां वियोगश्च विघ्ना लौकिकजीवने ।
एकैकापि किलापत्तिर्धैर्यापहरणे क्षमा ॥ ८ ।

अस्यां विपदवस्थायामाधार एक एव हि ।
सद्गुरौ परमार्थे च निष्ठाऽविचलिता परा ॥ ९ ॥

दीर्घकालं प्रतिदिनं ज्येष्ठेण गुरुबन्धुना ।
अम्बुरावेण सहितं सोऽकरोन्नामचिन्तनम् ॥ १० ॥

एकदा स्वप्नदृष्टान्तस्तस्यासीद्दृशणोसदा ।
सद्गुरुं कथयन्तं तं ध्याने यद्वस्तु पश्यसि ॥ ११ ॥

नेत्रयोः पुरतो नित्यं तद्देवेति न मन्यसे
व्याधेरतः शरीरस्य मुक्तस्त्वं न भविष्यसि ॥ १२ ॥

पुनरप्येकदा ध्यानेऽशृणोत् शब्दान् हि सद्गुरोः ।
'इदं पुष्पं गृहाण त्वं' ध्यानस्यान्ते ययौ यदा ॥ १३ ॥

समाधेर्वन्दनार्थं स सद्गुरोर्दृष्टवान् तदा ।
पुष्पमेकं नव्यमेव समाधेः शिरसि स्थितम् ॥ १४ ॥

निर्दिष्टं गुरुणा पुष्पं यत्तद्देवेति भावयन् ।
सेवितं भेषजमिति प्रत्यहं स्वल्पमेव तत् ॥ १५ ॥

ऊनं वर्षद्वयादेवं हिंचगिर्यां वसन् किल ।
विनौषधं श्रद्धयैव सुचिरं नामचिन्तनात् ॥ १६

न केवलं व्याधिमुक्ता तनुस्तस्याभवत् परम् ।
दिव्यानुभूतिभिर्नैकैः समृद्धं तस्य जीवनम् ॥ १७

साधकस्याभवत् सिद्धः पश्यन्नात्मानमात्मनि ।
अकामोऽप्याप्तकामश्च पूर्णकामोऽभुन्महाप्रभः ॥ १८ ॥

दिव्याः स्वानुभवाः प्राप्ताः केचित्तेनैव वर्णिताः ।
अभङ्गे तानहं मन्ये यत्तुमत्रोचितं भवेत् ॥ १९ ॥

ध्याने दृष्टं आलयं मौक्तिकानाम्
शुभ्रं शुद्धं शोभनं दीप्तिमच्च ।
दिव्यप्रभां चंद्रिकाया अपश्यत्
चक्रे श्वेते श्यामवर्णं च चक्रम् ॥ २० ॥

शेषस्य पुच्छं वलयैर्युतं च
तेन दृष्टो विश्वतश्चक्षुरात्मा ।
देवस्तथा सगुणो निर्गुणोऽपि
गुरोः प्रसादाद्गुमदीश्वरस्य ॥ २१ ॥

ध्याने 'दत्तदिगम्बरमहेश' नामानि चाशृणोद् रामः ।
गुरुदत्तबीजनाम्नो यानि विभिन्नानि तेन संदृष्टः ॥ २२ ॥

अभ्युत्थाय यदा रामोऽब्रवीदनुभवं त्विमम् ।
'जितं त्वये' त्याह सोऽपि हर्षनिर्भरचेतसा ॥ २३ ॥

ते बीजनामाङ्कुरितं त्वं भविष्यस्यतः परम् ।
अधिकृतो नाम दातुं साधकेभ्योऽवदत् पुनः ॥ २४ ॥

अशृणोद् धर्मशालायां वडोलि नाम खेटके ।
इस्लामधर्मनामानि स्वस्वकमलादनन्तरम् ॥ २५

अरयुद्रेति शब्दं सो ध्याने शुश्रावचैकदा ।
अपि तस्याकृतिस्तेन तदा दृष्टा भवेद् ननु ॥ २६ ॥

यतः स कारखानीसं पप्रच्छ कुतुकेन हि ।
उष्ट्र एवाभवत् किं नु अरयुष्ट्रस्य वाहनम् ॥ २७ ॥

संपश्यन् दिव्यनेत्राभ्यामेकाग्रमनसाखिलम् ।
विश्वं व्याप्तं ज्योतिषैव प्रापानुभवमद्भुतम् ॥ २८ ॥

प्राप्तव्यमेव मनुजेन मनुष्यदेहे
　　लब्धं मयास्ति कृपया च गुरोरिदानीम् ।
तस्यैच्छयैव सकलं तदतः परं स्यात्
　　धन्योऽस्म्यहं वच इदं वदति स रामः ॥ २९ ॥

पुरा दुर्बलो यद्यपरतु किलासीत्
　　इदानीं स नवोर्णवस्त्रावृतोऽयम् ।
अहो पौषमासे व्यतरद् जनेभ्यः ।
　　स्वपद्भ्यां परम् भोजनायागतेभ्यः ॥ ३० ॥

व्याधिमुक्तेन तेनातो गन्तुं पुण्यपुरीं पुनः ।
अनुज्ञयाम्पुरायस्य सेवार्थं निश्चितं कृतम् ॥ ३१ ॥

नानुकूलं पुण्यपुरं तनोः स्वास्थ्याय तस्य तु ।
अतो रामः संस्थयाभूद् नियुक्तः सांगलीपुरे ॥ ३२ ॥

विलिंग्डनमहाविद्यालये प्राध्यापकेति च ।
ज्ञात्वा हिंवगिरेस्तत्र सेवार्थं राम आययौ ॥ ३३ ॥

इत्थं निवासे किल हिमगिर्याम्
कालं च वर्षाधिकमासषट्कम् ।
ततो गुरुस्वास्थ्यमवाप रामः
तथापरोहाप्यनुभूतिसानुम् ॥ ३४ ॥

इति वामनकविरचिते श्रीगुरुदेवकथामृते गुरुस्वास्थ्याय हिमगिरीनिवासो नाम नवमस्तरङ्गः ।

# दशमस्तरङ्गः

सद्गुरोरुमदीशस्य स्वप्नादेशानुसारतः ।
एकोनविंशति शते द्वाविंशे वत्सरेऽधिके ॥ १ ॥

मनुनाम्ना वैद्यकुले जातया कन्यया सह ।
रामस्य चेरलामपुरे द्वितीयोऽभवदुद्वहः ॥ २ ॥

नाम्ना प्रथमभार्याया विवाहानन्तरं मनुः ।
आसीत् संबोधिता सीतायांइत्येवोत्तरायुषि ॥ ३ ॥

उपदिदयैव ते भार्यां नवां दास्यामि निश्चितम् ।
स्वप्नादेशो दत्त आसीद्रामस्य गुरुणा किल ॥ ४ ॥

पश्चात्तथाल्पकालेन रामो भार्यासमन्वितः ।
समाधिदर्शनायागाद् गुरोर्हिंचगिरिं शुभाम् ॥ ५ ॥

सीता ध्यानार्थमासीना समाधिपुरतो यदा ।
उमदीशगुरोः प्राप यथादिष्टमनुग्रहम् ॥ ६ ॥

एतेन रामभद्रस्तु परमाल्हादितोऽभवत् ।
निर्याणोत्तरमस्तित्वमनुभूयोमदीशप्रभोः ॥ ७ ॥

स्वास्थ्याभावात् शरीरस्य सांगलीनगरे पुनः ।
रामचन्द्रो गच्छति स्म हिंचगेरीं मुहुर्मुहुः ॥ ८ ॥

यदुकाले तस्यासीदिच्छा केतुं भुवं निवासार्थम् ।
स्वतनोः स्वास्थ्यस्य कृते हिंचगिरीसन्निधिस्थितग्रामे ॥ ९ ॥

संकल्पः सोऽभूदधुना दृढः प्रयत्नान् हि कर्तुमारेभे ।
भूशोधने च साह्याद् मित्राणां चाधिकारिणां रामः ॥ १० ॥

गजेन्द्रगड्करो वाली नाम्ना द्वावधिकारिणौ ।
रामचन्द्रस्यैतदर्थे साहाय्यं भूरि चक्रतुः ॥ ११ ॥

एकदा हिंचगिर्यां वै ध्यानं कुर्वन् स्थितोऽभवत् ।
रामो निद्रावशः स्वप्ने पीनं गौरशरीरकम् ॥ १२ ॥

अपश्यदेकं पुरुषं व्याहरन्तमिदं वचः ।
निंबर्गीशमहाराजो निंबाळस्थानकं गतः ॥ १३ ॥

भक्तिप्रसरमद्यापि महाराजः करोति किम् ।
प्रपच्छ रामभद्रस्तं प्राप्तवानिदमुत्तरम् ॥ १४ ॥

नेत्रे कर्णौ मुखं चापि निमील्य कुरु चिन्तनम् ।
विदितं ते यथाकालं सर्वमेव भविष्यति ॥ १५ ॥

सम्यग् विचिन्त्य स्वप्नार्थं रामचन्द्रेण निश्चितम् ।
क्रेतुं भूमिं निवासाय निंबाळस्थानकान्तिके ॥ १६ ॥

दैवस्य सद्गुरोश्चैव कृपया तस्य निश्चयः ।
स्वल्पकाले सुसफल आयासेन विनाभवत् ॥ १७ ॥

पाटीलसंज्ञोमक्काया नाडगौडाह्वयस्य च ।
स्थानकस्य समीपस्थां निजभूमिं सुविस्तृताम् ॥ १८ ॥

उभयोरानुकूल्येन वालीनाम्नाधिकारिणः
साहाय्याद् रामचन्द्रस्तु स्वल्पमूल्येन प्राप्तवान् ॥ १९ ॥

स्थानस्यास्य निवासाय रामचन्द्रस्य निर्णये ।
उद्देश आसीद् द्विविधो लौकिकः पारमार्थिकः ॥ २० ॥

स्थानादस्मान्नातिदूरं हिंचगेरी तथोमदी ।
तथैव निंबर्गीशस्य निंबर्गीखेटकं शुभम् ॥ २१ ॥

निंबाळस्थानकस्येदं संलग्नं स्थानमेव च ।
निंबाळग्राम यद्यपि नातिदूरो हि वर्तते ॥ २२ ॥

आरोग्यस्य कृते चापि सर्वोत्तममिदं स्थलम् ।
संयुते लोहमार्गेण सोलापूरविजापूरे ॥ २३ ॥

नियोजितं लघुगृहं निर्मातुं रामभाउणा ।
अस्मिन् स्थले समारब्धं कर्तुं साहित्यसंग्रहम् ॥ २४ ॥

तनोः स्वास्थ्याय कालेऽस्मिन् स्थित्या निंबाळखेटके ।
नाडगौडानामकस्य सद्गृहस्थस्य सद्मनि ॥ २५ ॥

प्राध्यापनाय याति स ततः स सांगलीपुरम् ।
अनेनासन्नसन्तुष्टा नैके संस्थासभासदः ॥ २६ ॥

दुर्दैवात् कारणमिदं जातं संस्थासभासदाम् ।
नैकेषां सह संघर्षस्याभूत्तेन स दुःखितः ॥ २७ ॥

दोषारोपौ सदस्यैर्द्वौ तद्विरुद्धं कृतौ तदा ।
संस्थानियमभङ्गश्चाध्यापनेऽनियमस्तथा ॥ २८ ॥

गभीरचिन्तनेनान्ते कृत्वा मनसि निश्चयम् ।
संस्थासेवात्यागपत्रं रामचन्द्रो ददौ किल ॥ २९ ॥

त्यागस्य विषये चर्चा नावश्या नोचिता मता ।
अलमेतद् वक्तुमेव त्यागस्तस्याभवत् खलु ॥ ३० ॥

न केवलं तद्धिताय नैकेषां श्रेयसे परम् ।
तिलकस्याभवत्त्यागो राष्ट्रस्य श्रेयसे यथा ॥ ३१ ॥

प्राध्यापनस्य कां कीर्तिं शाश्वतीं कीर्तिमुत्तमाम् ।
स लेभे परमार्थस्य क्षेत्रे विश्वे च भारते ॥ ३२ ॥

किन्तु रामो ब्रवीति स्म कातंक्षेन मुहुर्मुहुः ।
फर्ग्यूसने सेवयैव प्रतिष्ठाप्यतमा मम ॥ ३३ ॥

इति वामनविरचिते श्रीगुरुदेवकथामृते प्राध्यापकपदत्यागो नाम दशमस्तरङ्गः ।

# एकादशस्तरङ्गः

निर्दिष्टमासीत् किल त्यागपत्रे
रामेण यच्चिन्तितं कार्यमेकम् ।
यतस्स्वरूपं महत् जीवनस्य ।
शेषायुषि स्यात्ममभावेन कर्तुम् ॥ १ ॥

कार्यं तदासीत् परमेश्वरास्तिः
लोके तथाध्यात्मपथप्रचारः ।
सेवानिवृत्तेर्द्रुतमेव पश्चात्
चित्तं दधौ तत्परिपूर्तये सः ॥ २ ॥

धर्मस्य परमार्थस्य प्रसारं कर्तुमिच्छुकान् ।
अध्यात्मविद्याजिज्ञासून् समानेतुं बुधान् जनान् ॥ ३ ॥

अध्यात्मधर्मयोः पीठं स्थापितं पुण्यपत्तने ।
अध्यात्मभवने तेन स्वल्पकालादनन्तरम् ॥ ४ ॥

अस्य विश्वस्ततत्त्वैरध्यापनस्य शोधने ।
अध्यात्मशास्त्रविषये कृतमालोच्य तत्किल ॥ ५ ॥

कर्तुं पोद्दारमन्यानां विदुषां प्रवचनम् ।
तत्त्वेतिहासविषये पीठस्यासीत् प्रयोजनम् ॥ ६ ॥

संचालकोऽस्य पीठस्य रामचन्द्रोऽभवत् स्वयम् ।
कार्यवाहौ दामले च गोडे प्राध्यापकद्वयी ॥ ७ ॥

राधाकृष्णोजयकरो आनियोग्यौन्धभूपति- ।
बेलवल्करा इमे चासन् पीठस्य मन्त्रिमण्डले ॥ ८ ॥

एकोनविंशति शतेऽधिकेऽब्दे पञ्चविंशति ।
एप्रीलमासे निंबाळे पूर्णासीद् गृहनिर्मितिः ॥ ९ ॥

गृहप्रवेशनात्पूर्वं सोल्हासं रामभाउणा ।
दिनान् सप्त कृतस्तत्र साधनामङ्गलोत्सवः ॥ १० ॥

बहवः साधकाः श्रेष्ठा उत्सवाय समागताः ।
शिवलिंगव्यात्युरावगिरिमल्लेश्वरादयः ॥ ११ ॥

रक्षायाः सद्गुरोः पात्रे भूम्यन्तर्मध्यमन्दिरे ।
निधायोपरि तच्चित्रं स्थापितं प्रथमं तदा ॥ १२ ॥

त्रिकालभजनं नामजपो घण्टात्रयं तथा ।
पोथीवाचनं चाभूत् सप्ताहस्य दिनक्रमः ॥ १३ ॥

साकथा शिवलिंगया तस्योत्सवस्य वर्णने महत् ।
पत्रमस्ति कृतं रम्यं स्वात्मानुभवपूरितम् ॥ १४ ॥

पुरतोऽन्तश्चक्षुषोऽभूत् रामस्वाम्य शुभे गृहे ।
मुनीनामपि साधूनां महतां नित्यदर्शनम् ॥ १५ ॥

दृष्टेर्दिव्यप्रभायाश्च स्वात्मानन्दसुखस्य च ।
मल्लिकासुमगन्धस्य नामापि सुखसेवनम् ॥ १६ ॥

रामचन्द्रस्य वासोऽभूद् गृहेऽस्मिन्नवनिर्मिते ।
सपत्नीकः सुखेनैव प्रायो वर्षद्वयाधिकम् ॥ १७ ॥

अस्मिन् कालावधावेव शुभैका घटनाभवत् ।
नाम्ना शकुन्तलां सीतादेवी कन्यामजीजनत् ॥ १८ ॥

कालं द्वादशवर्षेभ्योऽधिकमभ्यस्य वाङ्मयम् ।
एकोनविंशतिशते षड्विंशाधिकवत्सरे ॥ १९ ॥

महाराष्ट्रीयभक्तानां ख्यातानामात्मदर्शिनाम् ।
ज्ञानेश्वरतुकारामरामदासमहात्मनाम् ॥ २० ॥

वचनामृतानीति नाम्ना चत्वारो रामभाउणा ।
अध्यात्मग्रन्थमालाया ग्रन्था इति प्रकाशिताः ॥ २१ ॥

'उपनिषत्तत्त्वविद्याया विधायकसमीक्षणम्' ।
नाम्ना ख्यातोऽपि ग्रन्थोऽस्मिन् काल एव प्रकाशितः ॥ २२ ॥

मॅक्डोनल्ड्कीथथाकोर्बीविंटरनिट्झराप्सनादिभिः ।
विश्वविख्यातविद्वद्भिर्ग्रन्थोऽयं भूरि शंसितः ॥ २३ ॥

ग्रन्थोऽक्षय्यस्वरूपोऽयं भवेद् भुवि सुनिश्चितम् ।
प्राशंसदिति शब्दैस्तु गार्बे जर्मनपण्डितः ॥ २४ ॥

पाण्डित्यस्य प्रकाण्डस्य सुदीर्घचिन्तनस्य च ।
प्रमाणभूतो ग्रन्थोऽयमिति रालिन्सनोऽलिखत् ॥ २५ ॥

दृष्टिक्षेपेण ग्रन्थस्य तत्र स्पष्टं हि दृश्यते ।
कियद्दूरेनाधिकस्त्वं गतोऽसि डायसनात् पुरः ॥ २६ ॥

विषयेऽस्मिन्नुपनिषत्तत्त्वसंशोधने खलु ।
इति प्रशंसोद्गारान् यं निजगाद भिर्मनः ॥ २७ ॥

लिखित्वा ह्याङ्ग्लभाषायामिमं ग्रन्थमलौकिकम् ।
कीर्तिं दिगन्तां संप्राप रामभाऊरसंशयम् ॥ २८ ॥

चतुर्विधा भूमिकास्तु विषयप्रतिपादने ।
दृश्यन्ते स्वीकृता नूनं ग्रन्थेऽस्मिन् रामभाऊणा ॥ २९ ॥

एका विवेचनपरा द्वितीया चैतिहासिका ।
शास्त्रमान्या तृतीया च चतुर्थी तुलनात्मिका ॥ ३० ॥

विश्वोत्पत्तेश्च विश्वस्य जीवस्य परमात्मनः ।
संबंधस्य मिथो ग्रन्थे मीमांसा तेन वै कृता ॥ ३१ ॥

युरोपीयैरात्मविद्भिः प्रोक्ताभिः स्वानुभूतिभिः ।
उपनिषद्वर्णिताभिः सह संतुलनं कृतम् ॥ ३२ ॥

सर्वोपनिषदां सारमेकं महात्मदर्शनम् ।
एषः प्रधानः सिद्धान्तो ग्रन्थेऽस्ति प्रतिपादितः ॥ ३३ ॥

भिन्ना भिन्नात्मसमार्गा उपनिषद्भिस्तु वर्णिताः ।
उच्चावचाः परिणताः सन्ति महात्मदर्शने ॥ ३४ ॥

नवमेवोपनिषदां दर्शनं रामभाऊणा ।
इत्थं कृतमपूर्वं च ग्रन्थेऽस्मिन् सुप्रतिष्ठितम् ॥ ३५ ॥

प्रयागविद्यापीठस्य झा गंगानाथपण्डितः ।
उपकुलगुरुर्योऽभूद् ग्रन्थेनातीवमोहितः ॥ ३६ ॥

विद्यापीठे तत्त्वविद्याविभागप्रमुखेति सः ।
अभ्यर्थयद्रामचन्द्रं साग्रहं भूषितुं पदम् ॥ ३७ ॥

रामचन्द्रो नानुकूलः स्वीकर्तुं तस्य चार्थनम् ।
स्वास्थ्याभावस्य चान्येषां कारणानां कृते किल ॥ ३८ ॥

किंतु सर्वाणि सौकर्याण्याश्वास्य च यदाकरोत् ।
अत्यादरेणाग्रहं ज्ञा तदा वै निरुपायतः ॥ ३९ ॥

उपकुलगुरुणैतत् साग्रहेण कृतं तु
अनुमतिमपि रामस्त्वम्बुरायस्य लब्ध्वा ।
अपि पुनरुमदीशस्यान्तरादेशमाप्त्या ।
मनसि बहु विचिन्त्याभ्यर्थनं स्वीचकार ॥ ४० ॥

इति वामनविरचिते श्रीगुरुदेवकथामृते सेवानिवृत्तेरनन्तरम्
जिंवाळगृहयामवर्णनं नामैकादशस्तरङ्गः ।

## द्वादशस्तरङ्गः

एकोनविंशति शतेऽधिकेऽब्दे सप्तविंशति ।
विद्यापीठे प्रयागस्य रामचन्द्रो नियोजितः ॥ १ ॥

तत्त्वज्ञानविभागस्य मुख्यः प्राध्यापकः किल ।
षड्विंशत्यब्दपर्यन्तं पदं तेन विभूषितम् ॥ २ ॥

आकर्ण्य तस्य नामैव सत्कीर्तिं चापि पाठकाः ।
तत्त्वज्ञानस्य बहवः आकृष्टाः पठनं प्रति ॥ ३ ॥

अध्यापनस्य नैपुण्यात् प्रकाण्डश्रुतवत्तया ।
आदरं परमं लेभे छात्राणां चाधिकारिणाम् ॥ ४ ॥

' कटरा ' भागे प्रयागस्य वर्षमेकं न्युवास सः ।
' थेली ' मार्गे स्थिते पश्चाद् गृहे द्वादशवत्सरान् ॥ ५ ॥

एकदा ' द्रौपदीघाट ' समीपस्थितभूतले ।
आसीत् कुर्वन् रामभद्रो ध्यानं मानसचक्षुषा ॥ ६ ॥

उमदीशमहाराजमात्मनः पुरतः स्थितम् ।
स्वहस्ते तालिकां धृत्वा भूरयन्तं हि ददर्श सः ॥ ७ ॥

गुरोरस्त्वयमादेश एवं मनसि धारयन् ।
तामेव भूमिमक्रीणत् स्वनिवासस्य हेतुना ॥ ८ ॥

सेवाकालस्य चरमे पादे वर्षचतुष्टयम् ।
रामचन्द्रस्य वासोऽभूत् स्वगृहे तत्र निर्मिते ॥ ९ ॥

चिरकालं तन्निवासे प्रयागे नामचिन्तनम् ।
अनपेक्ष्य दिवारात्रं निद्रामशनमेव वा ॥ १० ॥

उग्रमाचरितं तेन चैकान्ते वृक्षराजिषु ।
गंगायमुनयोस्तीरे परमार्थस्य सिद्धये ॥ ११ ॥

विद्युद्रथेनैव जगाम प्रायो
भागीरथीतोयवहातटाके ।
सुविश्रुते 'द्रौपदीघाट' नाम्ना
स्थले जपार्थं वटवृक्षपंक्त्याम् ॥ १२ ॥

स्थित्वा जपं तद्गुह एव चक्रे
संबोध्य रूपान्तरितां गुहां तत् ।
सुदीर्घमात्मानुभवान् सुदिव्यान्
अत्यद्भुतानेकविधानवाप ॥ १३ ॥

विश्वतश्चक्षुषोऽनन्ते तथानन्तस्य दर्शनम् ।
अनुभूतं स्पर्शनं च देवसंभाषणं तथा ॥ १४ ॥

शुश्रावानाहतान्नादान् स घोरान्मधुरानपि ।
ब्रह्मरन्ध्राद्वन्धमयदमृतस्यापि सेवनम् ॥ १५ ॥

'वचनामृता'नां ग्रन्थानामाधारेण हि मुख्यतः ।
एकोनविंशतिशते वर्षे द्वात्रिंशदुत्तरे ॥ १६ ॥

ग्रन्थः साक्षात्कारपथो महाराष्ट्रेऽभिधो महान् ।
आसीत् प्रकाशितस्तेन विद्वद्भिर्भूरि शंसितः ॥ १७ ॥

अपूर्वोऽयं ग्रन्थ इति झा गंगानाथपण्डितः।
अथर्णवप्रागराजशर्मा प्राध्यापकस्तथा ॥ १८ ॥

विद्वान् मैक्नीकलश्चापि कोकिलेश्वरनामकाः।
कलकत्ताविश्वविद्यालयस्य शास्त्रिणस्तु ये ॥ १९ ॥

प्रस्तावनास्य ग्रन्थस्य रामेण लिखिता स्वयम्।
साक्षात्कारस्य तस्यां हि मीमांसा तेन या कृता ॥ २० ॥

सर्वाङ्गपरिपूर्णा सा व्यनक्ति च पदे पदे।
प्रज्ञां समुज्ज्वलां तस्य प्रतिभां सूक्ष्मदर्शिनीम् ॥ २१ ॥

प्रोक्ताः पञ्चविधा मार्गा ग्रन्थे तेनात्मदर्शिनाम्।
प्रथमो बुद्धिनिष्ठानां ज्ञानेशादिसतामिव ॥ २२ ॥

द्वितीयो लोकनिष्ठानां साधूनां नामदेववत्।
तृतीयो व्यक्तिनिष्ठानां तुकारामस्य सदृशाम् ॥ २३ ॥

एकनाथादिसाधूनां प्रपञ्चपरमार्थयोः।
समन्वयस्वरूपोयश्चतुर्थोऽसौ निगद्यते ॥ २४ ॥

रामदासादिभक्तेषु दृश्यते यो विशेषतः।
लोकसंग्रहनिष्ठोऽसौ कर्ममुख्यश्च पञ्चमः ॥ २५ ॥

आंग्लवाण्यामिमं ग्रन्थं लिखित्वा रामभाउणा।
महाराष्ट्रीयसाधूनां सर्वेभ्यः सुष्ठु दर्शितम् ॥ २६ ॥

पारमार्थिकमैश्वर्यं पूर्णं दिव्यानुभूतिभिः।
तुल्यमेवहि विश्वस्य सर्वेषामात्मदर्शिनाम् ॥ २७ ॥

विशेषेण ज्ञानराजस्याध्यात्मकाव्यवैभवम् ।
विश्वसारस्वते श्रेष्ठमपूर्वमिति दर्शितम् ॥ २८ ॥

एकोनविंशतिशतेऽब्दे त्रयस्त्रिंशदुत्तरे ।
अम्बुरावस्य निर्याणमभवत्तु विजापुरे ॥ २९ ॥

वार्तां पठन् कारखानीसपत्रात्
तां शोकदां दुःखितो रामभद्रः ।
पत्रोत्तरेऽवर्णयद्योग्यतां स
तथा गुणानम्बुरावस्य दिव्यान् ॥ ३० ॥

आसीत् स गुरुबन्धुश्च ज्येष्ठः श्रेष्ठः पितुः समः ।
रामभावोर्दृढस्तस्मिन् स्नेहश्च परमादरः ॥ ३१ ॥

निंबर्गीग्रामनिकटे ग्रामे जिग्जिणिसंज्ञिते ।
कुलकर्णीकुले जातो दारिद्र्येणातिपीडितः ॥ ३२ ॥

उमदीशेनोपदिष्टः कुर्वैवाखण्डसाधनम् ।
साधकस्याभवत् सिद्धो गुरुणापि प्रशंसितः ॥ ३३ ॥

नाजानाद् दैवतं ह्यन्यद् विना किमपि सद्गुरोः ।
एवंविधा यस्य चासीद् भक्तिरेकान्तिका परा ॥ ३४ ॥

उमदीशस्य निर्याणानन्तरं जीवनावधिम् ।
अवहत् संप्रदायस्य चिरकालं धुरं खलु ॥ ३५ ॥

हिंचगेरीमठाधीशो भक्तिमार्गविवृद्धये ।
आयुः सर्वं व्यतीयाय गुरुनिष्ठापरायणः ॥ ३६ ॥

अनेकेभ्यः साधकेभ्योऽनुग्रहं हि चकार सः ।
कर्णाटके महाराष्ट्रे शिष्यवृन्दोऽस्ति तस्य च ॥ ३७ ॥

आमृत्योरम्बुरावस्याधिकारसंयुतोऽपि सन् ।
रामचन्द्रो नामदीक्षां नादात् केभ्यः कदाचन ॥ ३८ ॥

अनन्तरं तन्नियोगान्नाद्यारेभे निरूपयतः ।
तुळपुळेकारखानीसद्वारा कर्तुमनुग्रहम् ॥ ३९ ॥

उपक्रमोऽयमभवत् समीचीनस्तु लाभदः ।
वृद्धये संप्रदायस्य परमार्थविवर्धने ॥ ४० ॥

सुशिक्षिताश्च बहव आंग्लविद्याविभूषिताः ।
परमार्थपथारूढा बभूवुर्नामधारकाः ॥ ४१ ॥

प्रारम्भे कतिचित्कालं रामचन्द्रस्तु साधकान् ।
नामोपदेशमकरोत् संयमेन परीक्ष्य च ॥ ४२ ॥

दयाद्युदारमनसा स काले चोत्तरोत्तरे ।
इच्छुकेभ्यो नामदीक्षां कृपया मेघवृष्टिवत् ॥ ४३ ॥

उदकस्य तु दौर्लभ्ये निंबाळस्याश्रमे सदा ।
जलोद्गमस्तत्र नासीत् कूपान्तखननान्मुहुः ॥ ४४ ॥

ध्यानं कुर्वन् रामचन्द्रः प्रयागेऽपश्यदेकदा ।
उमदीशमहाराजं पीताम्बरसमावृतम् ॥ ४५ ॥

भिन्दन्तं लोहदण्डेन कूपस्यान्तः स्थितां शिलाम् ।
सहसा तत्प्रहारेण शिलायाश्च जलोद्गमः ॥ ४६ ॥

श्व एवाहो किमाश्चर्यं विद्युत्संदेशमाप सः ।
निंवालाद् खनने वाप्या नातिदूरं किलाश्रमात् ॥ ४७ ॥

लोहदण्डप्रहारेभ्यः सहसा निर्झरोद्गमः ।
अभूत् पानाय सलिलं प्रभूतं मधुरं तथा ॥ ४८ ॥

ध्याने ह्यस्तेन यद् दृष्टं सत्यमासीत् श्व एव हि ।
पश्यन् गुरुप्रसादेन हृष्टः स वार्तयानया ॥ ४९ ॥

कूपोऽयं मन्यते तस्मान्निंवालाश्रममण्डनम् ।
तीर्थं हि पावनं साक्षात् तस्य प्रासादिकं जलम् ॥ ५० ॥

नागपूरे भारतीयतत्त्वविद्याधिवेशनम् ।
प्रयोदशमभूत्तस्य रामचन्द्रो नियोजितः ॥ ५१ ॥

अध्यक्ष इति यत्तेन तदा हि भाषणं कृतम् ।
तदभूद् बहुगम्भीरं सुविचारपरिप्लुतम् ॥ ५२ ॥

यूरोपीयैस्तत्त्वविद्भिः शास्त्रैर्विविधेषु च ।
भौतिकाध्यात्मशास्त्रेषु कृत्वा संशोधनं महत् ॥ ५३ ॥

सुनिश्चितानि तत्त्वानि तान्यालोच्य स्वभाषणे ।
भारताध्यात्मविद्यायाः कृतस्तेन समन्वयः ॥ ५४ ॥

पूर्वं स्वप्ने यथादिष्टं बहुकालेन तस्य वै ।
द्वितीयस्तनयो जातः सीतादेव्याः सुशोभनः ॥ ५५ ॥

तदपत्यं भोजयन्तं स्वप्ने सोऽपश्यदेकदा ।
उमदीशं स्वहस्तेन येन सो मुदितोऽभवत् ॥ ५६ ॥

परं चतुर्थमासान्ते दुर्दैवात्तदपत्यकम् ।
पञ्चत्वमाप सर्वेषां भूत्वा शोकस्य कारणम् ॥ ५७ ॥

शकुन्तलायाः कन्याया विवाहश्चाभवत् शुभः ।
कुलशीलज्ञानवता ग्वाल्हेरपुरवासिना ॥ ५८ ॥

आपटेकुलसंभूतविश्वनाथेन धीमता ।
तयोरपत्यानि त्रीणि नंदिनीज्योतिदीपकाः ॥ ५९ ॥

ऋतुवेदग्रहधरासंमिते खैस्त्यवत्सरे ।
विद्यापीठस्य सेवायाः स निवृत्तोऽभवत् किल ॥ ६० ॥

सेवानिवृत्तिपूर्वं स मासषट्कं व्यभूषयत् ।
विद्यापीठस्योपकुलगुरोस्तु दुर्लभं पदम् ॥ ६१ ॥

दत्त्वा तु पदवीं 'डी लिट्' विद्यापीठेन गौरवः ।
कृतो न केवलं तस्य स्वात्मनश्चापि वर्धितः ॥ ६२ ॥

तेनैव विद्यापीठेन तन्निवृत्तेरनन्तरम् ।
प्राध्यापकः 'सतां मान्यः' पदव्या स विभूषितः ॥ ६३ ॥

एवं मया निगदितं चरितं मनोज्ञम्
वासस्य दीर्घसमयस्य प्रयागपुर्याम् ।
आत्मानुभूतिरुचिरं बहुमानयुक्तम्
स्वास्थ्यप्रदं सुखकरं किल रामभावोः ॥ ६४ ॥

इति वामनविरचिते श्रीगुरुदेवकथामृते प्रयागविद्यापीठे प्राध्यापनकालस्य वर्णनं नाम द्वादशस्तरङ्गः ।

# त्रयोदशस्तरङ्गः

सेवानिवृत्तेः पश्चात्तु निंबाळाश्रम एव हि ।
अभूत्तस्य निवासस्य परमार्थस्य चालयः ॥ १ ॥

पठनं दासबोधस्य त्रिकालं साधनं तथा ।
त्रिकालं भजनंचासीदाश्रमस्य दिनक्रमः ॥ २ ॥

वैशिष्ट्यमाश्रमस्याभूत् परमार्थसभा किल ।
प्रत्यहं गुरुदेवस्योपस्थितौ स्फूर्तिदायिनी ॥ ३ ॥

भक्तैः पदानि गीतानि पत्राणां पठनं गुरोः ।
उमदीशस्य संप्रोक्ताः स्मृतयो विविधास्तथा ॥ ४ ॥

अध्यात्मविषये चर्चा गुरुदेवेन वै कृता ।
हितोपदेशप्रचुरा सभाकार्यक्रमोऽभवत् ॥५॥

अध्यात्मसभयाकृष्टाः परस्था बहवो जनाः ।
सुशिक्षिताश्च विद्वांसो निंबाळं मुहुराययुः ॥ ६ ॥

संबोधितो रामभाऊरेतैस्तु परमादरात् ।
गुरुदेवेति नाम्नैव ख्यातः सोऽभूत्ततः परम् ॥ ७ ॥

निंबर्गीदासयोक्तयोऽध्यात्ममुख्याः
कर्णाटवाण्यांच भुवि प्रसिद्धाः ।
संगृह्य ता बोधसुधेति नाम्ना
प्रकाशयामास स ग्रन्थमेकम् ॥ ८ ॥

यद्यप्ययं लघुग्रन्थो महार्हो नूनमेव सः ।
निंबर्गीसंप्रदायस्य तत्त्वरत्नप्रदीपकः ॥ ९ ॥

सांगलीनृपसाहाय्यात् स्थापितं सांगलीपुरे ।
अध्यात्ममन्दिरं तेन कालेऽस्मिन् शुभदे किल ॥ १० ॥

अध्यात्मविद्यापीठं यन्निंबाळे स्थापितं पुरा ।
तस्येदमभवत् शाखा प्रयागे चापरा तथा ॥ ११ ॥

स्थानानीमानि चान्यानि लोकोद्धारक आययौ ।
गुरुदेवो भाषणानि कर्तुमध्यात्मवृद्धये ॥ १२ ॥

कौशिकव्याख्यानमालायां द्वे व्याख्याने बुधोचिते ।
रामः पुण्यपुरे एस्. पी. महाविद्यालये ददौ ॥ १३ ॥

' ज्ञानेश्वरस्तथा हिन्दीभाषिकाः कवितावयः ' ।
विषये यद्गम्भीरे वैदुष्यपरिपूरिते ॥ १४ ॥

ऋषिवेदग्रहधरासंमिते खैस्तवत्सरे ।
गुर्जरविद्यासभाह्वाय ख्याते कर्णावतीपुरे ॥ १५ ॥

निमन्त्रितो रामचन्द्रो द्वे व्याख्याने प्रयच्छतुम् ।
मावळणकरः सभाध्यक्षस्तदा संसद्सभापतिः ॥ १[illegible]

तेनासीन्नवभारतस्य पुरतः कार्यं यदाध्यात्मिकम्
भूयाद् मानवतैक्यमेव सफलं चास्यां पृथिव्यां
सिद्धान्तः प्रतिपादितो ह्यभिनवो
रेकं विश्वमिदं तथाहि भगवानेकश्च धर्मो

विस्तार्यते च व्याख्याने तस्य ग्रन्थः प्रकाशितः ।
ऋतुबाणग्रहधरासंमिते खिस्तवत्सरे ॥ १८ ॥

महात्मागांधिजीहिन्दीभक्ताध्यात्मिकधारणा ।
इति नाम्ना प्रसिद्धो य एतया सभयैव हि ॥ १९ ॥

ग्रन्थेऽस्मिन् दर्शितं सम्यक् साधारं रामभाउणा ।
परमार्थे यद्मूलं गांधिनोऽखिलजीवनम् ॥ २० ॥

जैनबौद्धेस्लामखिस्तमतानां गांधिजीवने ।
तथा वैष्णवभक्तानां बहुंमस्य मतस्य च ॥ २१ ॥

सर्वाधिकं च गीताया ईशोपनिषदस्तथा ।
दृश्यते सुप्रभावो यः स्वरूपं तस्य वर्णितम् ॥ २२ ॥

'चरखा' वास्तु वैशिष्ट्यं गांधिजीसाधनापथः ।
अन्तर्नादः श्रुतस्तेन ग्रन्थेऽस्मिन् सुष्ठु वर्णिताः ॥ २३ ॥

आसीत् प्रयागवासे नु जातेच्छा राममानसे ।
स्वसेवकेभ्य आकर्ण्य नापिकाश्चात्मनस्तथा ॥ २४ ॥

हिन्दीसद्भक्तसाधूनां नानाभक्तिपदानि वै ।
हिन्दीसारस्वताभ्यासं सुसूक्ष्मं कर्तुमैयहि ॥ २५ ॥

स्वमित्राणामतस्तेन हिन्दीसाहित्यकोविदाम् ।
साहाय्येन कृतोऽभ्यासः साहित्यस्य शनैः शनैः ॥ २६ ॥

शुक्लो देवीप्रसादाख्यो यो विद्वांश्च सुहृद्वरः ।
तस्मै चकार साह्यं स साहित्याध्ययने परम् ॥ २७ ॥

अवेक्ष्य भक्तिसाहित्यं हिन्दीवाण्यां समुज्ज्वलम् ।
आत्मानुभूतिविषये समृद्धं गाढमद्भुतम् ॥ २८ ॥

लिखितुं तेन ग्रन्थौ द्वौ संकल्पो मानसे कृतः ।
' सोपानं परमार्थस्य ' तयोरेकस्तु विद्यते ॥ २९ ॥

एकोनविंशति शते षट्पञ्चाशसमेऽधिके ।
वर्षे प्रकाशितः सोऽभूत् सांगल्यध्यात्ममन्दिरात् ॥ ३० ॥

पारमार्थिकपद्यानां हिन्दीभक्तात्मदर्शिनाम् ।
संग्रहोऽस्ति कृतः सम्यक् ग्रन्थेऽस्मिन् रामभाउणा ॥ ३१

प्रकाशनसमारोहो तस्याभूत् सांगलीपुरे ।
राधाकृष्णस्तदाध्यक्ष उपराष्ट्रपतिश्च यः ॥ ३२ ॥

वर्णयन् रामभद्रस्य महतीं योग्यतां तथा ।
राधाकृष्णोऽब्रवीदेतत् सुप्रसिद्धं वचः किल ॥ ३३ ॥

रामचन्द्रश्चरस्यैव जीवनं स्वात्मदर्शिनः ।
वयं तु केवलं सर्वे तत्त्वज्ञानप्रजल्पिनः ॥ ३४ ॥

आंग्लभाषां समाश्रित्य स्वल्पकालादनन्तरम् ।
ग्रन्थः प्रकाशितस्तेन द्वितीयो बहुविश्रुतः ॥ ३५ ॥

हिन्दीसारस्वते देवप्राप्तिमार्गेति संज्ञितः ।
यस्मिन् साक्षात्कारशास्त्रमीमांसा सुष्ठु विद्यते ॥ ३६ ॥

परमार्थे प्रवृत्तिस्तु विशुद्धं जीवनं तथा ।
पन्थानः साधनानां च संबन्धो देवभक्तयोः ॥ ३७ ॥

साक्षात्कारस्ततः पश्चात् प्रोक्तः पञ्चपदात्मकः ।
सोपानः परमार्थस्य ग्रन्थेऽस्मिन् रामभाउणा ॥ ३८ ॥

राष्ट्राध्यक्षस्य राजेन्द्रप्रसादस्य करेण सः ।
राष्ट्राध्यक्षस्य भवने दिल्ल्यामासीत् प्रकाशितः ॥ ३९ ॥

अयं ग्रन्थो भवत्येव हिन्दीसाहित्यभूषणम् ।
इति शब्दैस्तु राजेन्द्रप्रसादो ग्रन्थमस्तवत् ॥ ४० ॥

विश्वविद्यालये नागपूरस्य सुचिरं पुरा ।
यानि व्याख्यानानि रामो गीताया विषये ददौ ॥ ४१ ॥

आलोच्य नानाग्रन्थांश्च पूर्वपश्चिमसूरिणाम् ।
नवागतविचारैस्तु तानि संपूर्य सोऽलिखत् ॥ ४२ ॥

'ईशाप्तिपथः श्रीमद्भगवद्गीतासु' पुस्तकम् ।
विद्यापीठेन तम्मूर्ध्योरूर्ध्वमस्ति प्रकाशितम् ॥ ४३ ॥

श्रीमद्भगवद्गीता साक्षात्कारस्य दर्शनं श्रेष्ठम् ।
ग्रन्थे सिद्धान्तोऽयं सुनिश्चितो रामभाउणा प्रोक्तः ॥ ४४ ॥

पुरातनेष्वनेकेषु गीताया भाष्यकृत्सु च ।
अयं ज्ञानेश्वरेणैव सिद्धान्तः प्रतिपादितः ॥ ४५ ॥

नानाभाषास्वनेकासु गीताभाष्येष्वसंशयम् ।
ज्ञानेश्वरी रामभावोर्मते भाष्यमनुत्तमम् ॥ ४६ ॥

सिद्धान्ताः शंकरादीनामाचार्याणां निवेदिताः ।
गीतार्थनिर्णयपरा विभिन्नास्तु परस्परम् ॥ ४७ ॥

तथारविन्दतिलकगांध्यादि नवसूरिणाम् ।
गीतातात्पर्यविषये वर्णितानि मतानि च ॥ ४८ ॥

ऑटोगार्बेफार्कुआरादीनां पश्चिमकोविदाम् ।
कथितानि च रामेण विभिन्नानि मतान्यपि ॥ ४९ ॥

एषां भिन्नमतानां च कर्तुं सुखसमन्वयम् ।
स्वमततत्त्वानुसारेण प्रयत्नस्तेन वै कृतः ॥ ५० ॥

गीतायाश्च परं तत्त्वं मयत्त्येवात्मदर्शनम् ।
समन्वयस्य निकषः एष यथास्ति तन्मते ॥ ५१ ॥

विशिष्टाद्वैतमद्वैतं द्वैतमन्यमतानि च ।
एषां मध्ये विरोधस्तु भासते नास्ति वस्तुतः ॥ ५२ ॥

आत्मानुभूतिसोपानमार्गा एते भवन्ति वै ।
परावरा इति ज्ञात्वा विरोधो लुप्यते किल ॥ ५३ ॥

ईशोऽस्ति कर्ता स्रष्टा वा निर्गुणः सगुणोऽपि वा ।
विश्वोत्तीर्णो विश्वमयो ध्रुवं वा जगदुद्भवम् ॥ ५४ ॥

क्रममुक्तिर्विदेहा वा विरोधानां समन्वयः ।
उपर्युक्ते हि निकषे तेन सम्यक् कृतोऽस्ति वै ॥ ५५ ॥

दर्शितस्तेन गीतार्थचक्रव्यूहात् सुरक्षितः ।
समन्वयात्मको मार्गो ग्रन्थेऽप्यभिनवः किल ॥ ५६ ॥

ग्रन्थोऽयं ग्रन्थराजोऽस्ति दासबोधसमः किल ।
तथैव लोकमान्यानां श्रेष्ठो गीतारहस्यवत् ॥ ५७ ॥

भक्तश्रेष्ठैकनाथस्य तथैव वचनामृतम् ।
अभूत् प्रकाशितं तेन निंबाळाध्यात्ममन्दिरात् ॥ ५८ ॥

कर्णाटकस्यसाधूनां साहित्यस्य चकार सः ।
चिरमध्ययनं सूक्ष्मं ग्रन्थलेखनहेतुना ॥ ५९ ॥

वेणुग्रामे धारवाडे तथैव हि विजापुरे ।
व्याख्यानान्यपि दत्तानि विषयेऽस्मिन् विभागशः ॥ ६०

कर्णाटवाङ्मये देवप्राप्तेर्मार्गाभिधः खलु ।
निर्याणानन्तरं तस्य ग्रन्थ आसीत् प्रकाशितः ॥ ६१ ।

कर्णाटविद्यापीठेन महत्कार्यमिदं कृतम् ।
कर्णाटश्रेष्ठपुत्रस्य कृत्येदं स्मारकं चिरम् ॥ ६२ ॥

साहित्यं हरिदासानां वीरशैवसतां तथा ।
स्वात्मानुभूतिविषये भवत्युच्चतमं किल ॥ ६३ ॥

दर्शितं गुरुदेवेन सप्रमाणमसंशयम् ।
ग्रन्थेऽस्मिन् प्रथममेव कर्णाटवाग्विदां मतम् ॥ ६४ ॥

आत्मानुभूतिशास्त्रस्य तरोः पक्वमिदं फलम् ।
प्रशंसितोऽस्त्ययं ग्रन्थस्तत्त्वविद्भिश्च पण्डितैः ॥ ६५ ॥

ग्रन्थस्यास्य विशेषोऽन्यो तेन प्रथममेवहि ।
स्पष्टं निवेदिताः सन्ति काश्चिद् स्वात्मानुभूतयः ॥ ६६ ॥

एकोनविंशतिशतेऽधिकेऽब्दे नवविंशति ।
कलकत्ताविश्वविद्यालयद्वारा ददौ हि सः ॥ ६७ ॥

'वेदान्तः पाश्चिमात्यानां विचारास्तात्त्विका' इति ।
विषये बहुगम्भीरं एकां व्याख्यानमालिकाम् ।। ६८ ।।

तदाप्रभृत्येव चासीत् संकल्पस्तस्य मानसे ।
विषयेऽस्मिन् ग्रन्थमेकं मौलिकं लिखितुं किल ।। ६९ ।।

भारतीयविचाराणां वेदान्तः परमावधिः ।
इति नाम्ना तु तस्येच्छा नैव संसिद्धिमागता ।। ७० ।।

आसन् ग्रन्थस्य टिप्पण्यो विस्तृतास्तेन याः कृताः ।
तदाधारात् तस्य शिष्यैस्तत्त्वविद्बुधैश्च कैः ।। ७१ ।।

ग्रन्थस्य रचनां कृत्वा तस्य नाम्नाधुना खलु ।
मुम्बय्या भवनविद्यापीठद्वारा प्रकाशितः ।। ७२ ।।

एवं मया वर्णितं रामभावोः
सेवानिवृत्त्युत्तरकालवृत्तम् ।
निंबाळवासस्य बहुप्रसन्न-
माध्यात्ममुख्यं रुचिरं समृद्धम् ।। ७३ ।।

इति वामनविरचिते श्रीगुरुदेवकथामृते विद्यापीठ सेवानिवृत्त्यनन्तरं
निंबाळवासो नाम त्रयोदशस्तरङ्गः ।

# चतुर्दशस्तरङ्गः

अहो भाग्यमेतन्महद् जम्बुखिण्ड्याः
समो रामचन्द्रस्य जातो महात्मा ।
न वा केवलं जन्मनस्तस्य भूमि-
स्तथानुग्रहस्यापि विद्यार्जनस्य ॥ १ ॥

विवर्धितं येन यशः समुज्ज्वलम्
स्वविद्यालयस्यापि च जन्मभूमेः ।
तथा स्वात्मनः संप्रदायस्य चापि
महत्याः किलाध्यात्मपरंपरायाः ॥ २ ॥

प्रसिद्धोऽखिले भारते यो वरेण्यः
सतां धीमतां चात्मविदां गरिष्ठः ।
किमाश्चर्यमत्युत्सुकास्तस्य कर्तुम्
यथार्हं जना गौरवं जम्बुखिण्ड्याः ॥ ३ ॥

सप्तति वर्षं पूर्णं स्याद् गुरुदेवायुषोऽल्पकाले तु ।
एकोनविंशतिशते षट्पञ्चाशत्तमेऽधिके वर्षे ॥ ४ ॥

जूले मासे यैस्त्ये शाके तृतीयकमे शुभे दिवसे ।
एवं श्रुत्वा वार्तामासन्नानन्दिता जनाः सर्वे ॥ ५ ॥

अहमप्यनुगृहीतो मार्चे मासेऽहि वत्सरस्यास्य ।
अन्यैः सह सज्जनैर्निपाळे रामभाऊणा नूनम् ॥ ६ ॥

तत एकस्मिन् दिवसे मिलिता मुख्याश्च साधका भक्ताः।
अमृतमहोत्सवमुचितं कर्तुं तेषां बभूव संकल्पः ॥ ७ ॥

महोत्सवस्य विषये दीर्घचर्चाभवत्तदा।
स्थापनं तैलचित्रस्य गुरुदेवस्य निश्चितम् ॥ ८ ॥

सुभव्ये हि प. भा. विद्यालयस्य मध्यमन्दिरे।
छात्रेभ्यो नित्यमादर्शः स्फूर्तिदस्तद्भवेदिति ॥ ९ ॥

निर्णीतं चापि संमानं कर्तुं तस्य यथोचितम्।
आगन्तुं जम्बुखिण्डीं स दद्यादनुमतिं यदि ॥ १० ॥

गुरुदेवं सपत्नीकं जम्बुखिण्डीपुरं प्रति।
महोत्सवार्थमानेतुं कृत्वा यत्नांस्तु सर्वशः ॥ ११ ॥

अहं कवटगीमौठी वयश्चाधिकृतास्तदा।
यतः स सुचिरं कालं जम्बुखिण्डीं हि नागतः ॥ १२ ॥

तथास्माभिः कैश्चिदन्यैः सह निंबाळमेत्य च।
कथितं गुरुदेवाय जम्बुखिण्डीजनेप्सितम् ॥ १३ ॥

प्रथमं न स्वीचकार गुरुदेवोऽभ्यर्थनं नः।
तत्समाः साधवः प्रायः स्वगौरवपराङ्मुखाः ॥ १४ ॥

नैकवारं तु निंबाळमगच्छाम यदा वयम्।
विचार्य बहुशोऽस्माकमौत्सुक्यं भक्तिपूरितम् ॥ १५ ॥

ददौ विहितनिर्बन्धामसौ स्वानुमतिं ततः
आनन्देन वयं सर्वे जम्बुखिण्डीं तदागताः ॥ १६ ॥

आदेशं प्राप्तवान् यावत् स्वगुरोर्निश्चितं हृदि ।
भावयेऽहं तावदेव दत्ता तेन च संमतिः ॥ १७ ॥

महोत्सवकृते कार्यकर्तॄणां स्थापिता तदा ।
सत्कारसमितिश्चैका मुख्यानां पुरवासिनाम् ॥ १८ ॥

समित्याः स्वागताध्यक्षपदे सर्वैर्नियोजिता ।
लीलावती राजमाता कार्याध्यक्षपदेत्वहम् ॥ १९ ॥

प. भा. विद्यालयं भव्यं निवासाय सुनिश्चितम् ।
अतिथीनामुत्सवार्थमागतानां स्थलान्तरात् ॥ २० ॥

गुरुदेवनिवासार्थं रामतीर्थे नृपगृहम् ।
सुचारु निश्चितं राजपालकानामनुज्ञया ॥ २१ ॥

सप्ताहो गुरुदेवेन यथादिष्टस्तु निश्चितः ।
रामतीर्थे हरिहरेश्वरस्य मन्दिरे तथा ॥ २२ ॥

शाके खिस्त्ये च जूलैय्यामृत्वसुग्रहभूमिते ।
समारोहो विनिर्णीतः प्रथमे दिवसत्रये ॥ २३ ॥

अपूर्वोऽभूत्समारोहः सुमहांश्च दिनत्रयम् ।
जमखिण्डीपुरस्थानामुत्साहेन यशोवहः ॥ २४ ॥

निमन्त्रिता अतिथयः साधका आगतास्तथा ।
समारोहाय बहवः परस्थलनिवासिनः ॥ २५ ॥

आद्ये दिने समारब्धः सप्ताहो देवमन्दिरे ।
तत्र नामजपायासन् मिलिता बहुसाधकाः ॥ २६ ॥

उत्सवस्य द्वितीयेऽह्नि पुरस्थे रंगमन्दिरे ।
कर्णाटकस्य सिंहेति संज्ञितैर्देशसेवकैः ॥ २७ ॥

सभाध्यक्षैर्देशपांडेगंगाधरमहोदयैः ।
चरितं गुरुदेवस्य स्फूर्तिप्रदमलौकिकम् ॥ २८ ॥

वर्णयित्वा सुरुचिरं तैलचित्रमनावृत्तम् ।
प. भा. विद्यालये नीत्वा स्थापितं तदनन्तरम् ॥ २९ ॥

अहो भाग्यं जम्बुखिण्ड्या विभूतिद्वयसंगमः ।
प. भा. विद्यालये जातो गंगायमुनयोरिव ॥ ३० ॥

तैलचित्रं रामभाचोः शालाया हीरकस्य च ।
शिलामूर्तिश्च शालाया निर्मातुरधिपस्य वै ॥ ३१ ॥

तद्दिने गुरुदेवस्य सायंकाले चिरेप्सितम् ।
सपत्नीकं जम्बुखिण्डीं बभूवागमनं शुभम् ॥ ३२ ॥

विस्तीर्णे प्राङ्गणे चासन्नुमारामेशमन्दिरे ।
तत्स्वागतार्थं मिलिताः जनाः पञ्चसहस्रशः ॥ ३३ ॥

अग्रद्वारे मन्दिरस्य पुष्पमाला समर्पिता ।
लीलावत्या राजमात्रा सत्कारसमितेः कृते ॥ ३४ ॥

स्वीकृत्य स्वागतं हृद्यं कृत्वा च शिवदर्शनम् ।
स निजानुग्रहस्थानं कटगीसदनं ययौ ॥ ३५ ॥

दीर्घकालानन्तरं तत् स्थानं दृष्ट्वा मुदान्वितः ।
स्मृतयः पूर्वकालीना उदितास्तस्य मानसे ॥ ३६ ॥

स्वल्पकालं गृहे तत्र स्थित्वा तु तदनन्तरम् ।
वासस्थानं प्रतस्थे स रामतीर्थे नृपालये ॥ ३७ ॥

निवासगमनात् पूर्वं प्रथमं स्मृतिपूर्वकम् ।
अगच्छद्दर्शनार्थं स श्रीरामेश्वरमन्दिरम् ॥ ३८ ॥

निमील्य लोचने ध्यानं कुर्वन् सोऽपश्यदद्भुतम् ।
धृतं रामेश्वरेणाङ्के तं शिशुममात्मनः ॥ ३९ ॥

अभूत्प्रमुदितस्तेन दिव्येनानुभवेन सः ।
यत एवंविधां प्राप प्रचीतिं न पुरा किल ॥ ४० ॥

तस्य जन्मतिथौ चाह्नि तृतीये रंगमन्दिरे ।
बभूव तस्य सत्कार आनन्दस्फूर्तिदायकः ॥ ४१ ॥

मिरजस्याधिपस्तात्यासाहेबः पटवर्धनः ।
सभाध्यक्षो जनाश्चासन् सहस्राधिकमागताः ॥ ४२ ॥

अध्यक्षस्यागताध्यक्षभाषणानन्तरं कृतम् ।
कार्याध्यक्षेण मया शुभसंदेशवाचनम् ॥ ४३ ॥

प्रेषिताः शुभसंदेशा अनेकैर्लोकनायकैः ।
पूज्यैः श्रीशंकराचार्यैः कुर्तकोट्यभिधैस्तथा ॥ ४४ ॥

सांगलूरपरांजपेमाटेरंगनाथदिवाकरैः ।
दीर्घायुश्चिन्तनपरा गुणगानसमन्विताः ॥ ४५ ॥

महोत्सवसमित्याथ स्वयमेव प्रकाशितः ।
ग्रन्थस्तस्य नियन्त्यानां मानपत्रं तथार्पितम् ॥ ४६ ॥

जम्बूपुरीपालिकया मानपत्रं समर्पितम् ।
तथा संस्थाभिरन्याभिः पुष्पमालाः समर्पिताः ॥ ४७ ॥

वैद्येन बापुरावेण सप्ततारानिवासिना ।
समर्थरामदासस्य 'शालजोडी' शुभार्पिता ॥ ४८ ॥

धामलेकारखानीसैर्विद्वद्भिरापरैस्तथा ।
कीर्तितं गुरुदेवस्य माहात्म्यममलं यशः ॥ ४९ ॥

प्रभोः प्रसादाद्य तपप्रभावात्
कृत्वात्मलाभं भवेद्यः कृतार्थः ।
सुधारसः सेवितश्चापि येन
स नूनमर्होऽस्त्यमृतोत्सवस्य ॥ ५० ॥

गुरुदेवो रामचन्द्रस्तथैवार्होऽस्त्यसंशयम् ।
एवमुक्तं वचः साधं धामलेभिः स्वभाषणे ॥ ५१ ॥

भाषणं गुरुदेवस्य लघ्वपि स्फूर्तिदं महत् ।
तथा गुर्वर्थगम्भीरं परमार्थप्रबोधकम् ॥ ५२ ॥

कन्नडे च महाराष्ट्र्यां तेन वै भाषणं कृतम् ।
श्रोतारश्चाभवन् सर्वे विस्मयानन्दपूरिताः ॥ ५३ ॥

देवस्य गुप्तरूपं यो व्यनक्त्येव स सद्गुरुः ।
इत्येवं लक्षणं तेन सद्गुरोः प्रतिपादितम् ॥ ५४ ॥

तल्लक्षणस्य विस्तारमारेभे कर्तुमेव सः ।
ध्वनिक्षेपणयन्त्रे [illegible] सहसा विघ्न उत्थितः ॥ ५५ ॥

अतश्च श्रवणाभावादपूर्णं तस्य भाषणम् ।
स्थितं सर्वे च श्रोतारोऽभवन्धैर्याद्यविप्लुताः ॥ ५६ ॥

निवासो गुरुदेवस्य समारोहादनन्तरम् ।
प्रायोऽभून्मासपर्यन्तमानन्दोल्हासपूरितः ॥ ५७ ॥

रामतीर्थं तदा नूनं परमार्थालयोऽभवत् ।
अध्यात्मालापभजनजपादिपरिपूरितम् ॥ ५८ ॥

तस्यावासस्य निकटे श्रीगजाननमन्दिरे ।
परमार्थसभा रात्रावभवत्प्रत्यहं किल ॥ ५९ ॥

सूरीणां संप्रदायस्य स्मृतयस्तत्र वर्णिताः ।
विशेषेणोमदीक्षास्य कैरपि ज्येष्ठसाधकैः ॥ ६० ॥

कथिताः कारखानीमैर्निंबर्गीदास्त्रिभिस्तथा ।
विविधा गुरुदेवस्य दिव्याः स्वात्मानुभूतयः ॥ ६१ ॥

आत्मनः पूर्वकालीनं गुरुदेवो गृहं ययौ ।
तत्र स्वाध्ययनस्थानं ददर्श कुतुकेन सः ॥ ६२ ॥

विवेकानन्दसाहित्यपठनं हि मया कृतम् ।
अत्रैव स ब्रवीति स्म सोल्हासं मिलितान् जनान् ॥ ६३ ॥

स्वगुरोः पादरजसा पावनानि स्थलान्यगात् ।
उमारामेश्वरादींश्च विविधान् शिवालयान् ॥ ६४ ॥

आगत्य मद्गृहं चापि सर्वान् स्थलमदर्शयत् ।
ध्यानं कुर्वन् प्राप यत्र प्रतीतिं प्रथमां हि सः ॥ ६५ ॥

मित्राणां गुरुबन्धूनां साधकानां गृहाण्यगात् ।
तथैव सुरपुरस्य संस्कृताध्यापकस्य च ॥ ६६ ॥

इच्छुकास्त्रिशतं नव्याः कृपयास्तेन दीक्षिताः ।
नरा नार्यः कुमाराश्च तेषु केऽपि च मुस्लिमाः ॥ ६७ ॥

गृहीतं तेन सहितं समितेश्च सभासदाम् ।
छायाचित्रं तथैवान्यत् साधकानां च तस्य च ॥ ६८ ॥

महोत्सवनिमित्तेन तस्य मासावधि शुभात् ।
दर्शनादभवन् धन्या जम्बुखिण्डीनिवासिनः ॥ ६९ ॥

प्रयाणं तस्य निर्वाकं ददृशुः साश्रुलोचनैः ।
धन्योद्गारान्समुद्गिरन्तोह्यसंख्या मिलिता जनाः ॥ ७० ॥

वर्षसप्ततिपूर्तौ यः कृतोऽमृतमहोत्सवः ।
सप्तत्यैव च श्लोकैः स सादरं वर्णितो मया ॥ ७१ ॥

सुधामहोत्सवस्य यत्
कृतं मया हि वर्णनम् ।
मनसि मे विवर्धताम्
गुरुपदाम्बुजे रतिम् ॥ ७२ ॥

इति वामनविरचिते श्रीगुरुदेवकथामृते अमृतमहोत्सववर्णनं नाम
चतुर्दशस्तरङ्गः ।

## पञ्चदशस्तरङ्गः

जम्बुखिण्डयास्तु निंबाळं निवर्त्यागत्यपूर्वकम् ।
लीलावत्यै राजमात्रे पत्रमेकं लिलेख सः ॥ १॥

धन्यवादान् ददौ तस्यै सत्कारसमितिं प्रति ।
जम्बुखिण्डीजनेभ्यश्च सर्वान् सत्कारस्यात्मनः कृते ॥ २॥

जम्बुखिण्डीपुरस्यार्थे व्यक्तस्तेनादरः परः ।
यत्र जातोऽनुगृहीतस्तया विद्यां स प्राप्तवान् ॥ ३॥

कर्णाटभणितसाहित्यविषये स निमन्त्रितः ।
व्याख्यानार्थं धारवाडपुरं मासत्रयादगात् ॥ ४॥

दर्शनार्थं तत्र तस्य प्रत्यहं बहवो जनाः ।
आगताः पुरमुख्याश्च विद्वांस अधिकारिणः ॥ ५॥

स्थित्वा दिनत्रयं तत्र स ययौ गदगं ततः ।
दिनमेकं तत्र वासं कृत्वा निंबाळमाययौ ॥ ६॥

मासे जानेवार्यां हयाक्षुरसभूमिते च खिस्ताब्दे ।
निंबर्गीदाससमाधेः पुरतो रचितं नवं सभास्थानम् ॥ ७॥

द्रष्टुमगान्निंबर्गीग्रामं सह साधकैश्च गुरुदेवः ।
अहमपि लीलावत्या देव्या सहितो गतोऽस्मि पुण्यपुरात् ॥ ८॥

संतुष्टोऽभूत् सभास्थानं संपश्यन्नवनिर्मितम् ।
छायाचित्रं तत्र तस्य गृहीतं साधकैः सह ॥ ९॥

सीतारामस्यात्र चतुर्भुजस्य
देवालयं वलभीमेन साकम् ।
प्राचीनं यत् वर्षशताधिकं च
लोके ज्ञातं भीमरायेति नाम्ना ॥ १० ॥

निंबर्गीशमहाराजो मन्दिरेऽस्मिन् हि प्रत्यहम् ।
अकरोन्नियमेनैव दासबोधनिरूपणम् ॥ ११ ॥

निंबर्गीशस्य सदनं तथैव च जपस्थलम् ।
दर्शयामास सर्वेभ्यो गुरुदेवः सकौतुकम् ॥ १२ ॥

निंबर्गीशेन यत्स्पृष्टं पावनं सर्वमेव तत् ।
मुहुर्मुहुर्मयीति स मिलितांस्तत्र साधकान् ॥ १३ ॥

मासद्वयाधिकं कालं निंबाळ एव सः स्थितः ।
पुनश्चापि शरीरस्य स्वास्थ्याभावस्य कारणात् ॥ १४ ॥

माघे मासे प्रयागं स प्रतस्थे सकुटुम्बकः ।
यात्रमेकं दिनं कृत्वा मार्गे मुम्बापुरे किल ॥ १५ ॥

कन्यां जामातरं द्रष्टुं मित्राणि साधकांस्तथा ।
ततः प्रयाणमकरोत् प्रयागे स्वगृहं प्रति ॥ १६ ॥

अत्यल्पकालं तत्रापि स्वास्थ्यं सोऽलभत पुनः ।
पर्जन्यघनवृष्ट्याभूत् कफरोगेण पीडितः ॥ १७ ॥

तथापि नामस्मरणे व्यत्ययो न भवेदिति ।
यावच्छक्यं प्रयेते स निश्चयेन दृढेन हि ॥ १८ ॥

ध्यानादूर्ध्वं भागवतं स शुक्लेन सहापठत् ।
आसीत् स परमाकृष्टो ग्रन्थेनानेन वै यतः ॥ १९ ॥

एवं सत्यपि रोगोऽगात् वृद्धिमेव दिने दिने ।
निसर्गोऽपि प्रयागस्य प्रतिकूलो ह्यमन्यत ॥ २० ॥

सुदिव्यानुभवान् प्राप पुरा यत्र स एकदा ।
अधुना प्राप तत्रैवातिमन्दानुभवान् यत ॥ २१ ॥

अतः प्रयागात्सियाळं शीघ्रमेव निवर्तितुम् ।
मनस्यालोचयामास तनोरस्वास्थ्यकारणात् ॥ २२ ॥

प्रयाणकाले तं द्रष्टुं प्रयागस्थानके गताः ।
नैके प्राध्यापकाः शिष्याः स्नेहात् कुलगुरुस्तथा ॥ २३ ॥

एकमेव दिनं तस्थौ पुण्यपुर्यां कथंचन ।
भगिन्यात्मजनान् द्रष्टुं सुहृदः साधकांस्तथा ॥ २४ ॥

'मन्दिरं परमार्थस्य' दामलेभिर्मया कृतम् ।
ग्रन्थस्य हस्तलिखितं दृष्ट्वा प्रमुदितोऽभवत् ॥ २५ ॥

कर्पूरारात्रिकं कृत्वा दत्तास्तेन शुभाशिषः ।
सपत्नीकं नु निंबाळं प्रतस्थे तद्दिनेहि सः ॥ २६ ॥

स पुणेस्थानकाश्रीतो दुर्बलत्वस्य कारणात् ।
वेत्रासनेनाधियाने तस्य चासनमन्तिके ॥ २७ ॥

निजासनसमीपं नु नापश्यत् पेटिकां यदा ।
उमदीदास्य पत्रानामपृच्छत् कुत्र सास्ति वै ॥ २८ ॥

अग्नियाने स्थलेऽन्यत्र श्रुत्वा सा निहिताभवत् ।
त्वरयैवागमत् तत्र पद्भ्यां तु विस्मिता जनाः ॥ २९ ॥

पेटिका यावदानीता तस्य चासनसन्निधौ ।
तावदेव स सन्तुष्टोऽभवत् विस्रब्धमानसः ॥ ३० ॥

इत्थं तस्योत्कटा भक्तिस्तमदीशे गुरौ किल ।
त्रिसत्यमस्मिन् काले तु तथा द्रष्टुं सुदुर्लभम् ॥ ३१ ॥

निंबाळेऽपि तनोः स्वास्थ्यं लेभेऽल्पं कालमेव सः ।
अनन्तरं पुनश्चासीद्व्यथितः कफपीडया ॥ ३२ ॥

कृत्वा निदानं रोगस्य ददुर्नानौषधानि ह ।
आर्याङ्ग्लवैद्यप्रवरा यत्नस्तेषां वृथाभवत् ॥ ३३ ॥

गृह्णामीति वदन् रामः सिषेवे न कदागदम् ।
यतस्तस्य दृढा श्रद्धा नामस्मरणभेषजे ॥ ३४ ॥

गुरोर्निर्याणकालस्य मर्यादोल्लंघिताभवत् ।
ननु दुःखेनेति तेन देहत्यागे कृता मतिः ॥ ३५ ॥

परं मनोगतमिदं न कदापि निवेदितम् ।
परोक्षमपरोक्षं वा कथंचिदपि कुत्रचित् ॥ ३६ ॥

शनैः शनैः प्रतिदिनं बभूव परिणामतः ।
क्षीणक्षीणा तनुस्तस्य सर्वेभ्यः क्लेशदायिनी ॥ ३७ ॥

नास्पृशज्जलमन्नं च सोऽन्ते दिनचतुष्टयम् ।
पश्यन्नात्मनि चात्मानं ध्यानमग्नेन चेतसा ॥ ३८ ॥

प्रातःकाले दिने चान्त्ये गुरुग्रामदिशा हि सः ।
यष्टिर्गत्या तैलयाने चक्रे घण्टाद्वयं जपम् ॥ ३९ ॥

गृहमागत्य शय्यायामभूत् ध्यानरतः पुनः ।
न कोऽप्यचिन्तयत्तस्य निर्वाणं तद्दिने भवेत् ॥ ४० ॥

अपि केभ्यो जनेभ्योऽसौ दिनेऽस्मिन्नाम वै ददौ ।
भजनगायकरो वैद्यो भाग्येनाप विक्रान्तिमम् ॥ ४१ ॥

पत्नीहस्तेन पीत्वा च जलस्य घुटिकाद्वयम् ।
शय्यामङ्गुलिनिर्देशात्कर्तुं भजनमादिशत् ॥ ४२ ॥

भजनान्ते यावदासीदुच्चैर्विट्ठलगर्जनम् ।
तदेव काले तद्देहादासीत्प्राणविसर्जनम् ॥ ४३ ॥

एकोनविंशतिशते सप्तपञ्चाशदुत्तरे ।
संवत्सरे जूनमासे क्रमाङ्के षड्दिने किल ॥ ४४ ॥

तिथिरासीज्ज्येष्ठशुक्ला दशमी गुरुवासरः ।
सैव शोकतिथिर्जाता निंबाळाश्रमवासिनाम् ॥ ४५ ॥

तद्दिनेऽस्तमिते सूर्ये भास्करे तेजसां पतौ ।
सुप्तोऽभूदपरः सूर्यः आत्मज्ञानदिवाकरः ॥ ४६ ॥

भक्तिज्ञानविरागाणां महर्षियोगिनां वरः ।
पाणिनिः परमार्थस्य धुरीणस्तत्त्वदर्शिनाम् ॥ ४७ ॥

अध्यात्मतेजसो मूर्तिः साधकानां मुनीश्वरः ।
साक्षात्कारस्य शास्त्रस्य भाष्यकारो महान् भुवि ॥ ४८ ॥

पूर्वपश्चिमतत्त्वज्ञः श्रेष्ठश्चाध्यात्मपण्डितः ।
तिलकः संप्रदायस्य देवात्मशक्तिसंयुतः ॥ ४९ ॥

स्थितप्रज्ञस्तथादर्शः प्रपञ्चपरमार्थयोः ।
निंबर्गीसंप्रदायस्य दिगन्ते च यशोवहः ॥ ५० ॥

गुरोरलौकिकः शिष्यो निवृत्तेर्ज्ञानदेववत् ।
एकाजनार्दनसमो रामकृष्णनरेन्द्रवत् ॥ ५१ ॥

विवेकजं नीतिमुख्यं नामस्मृत्येकसाधनम् ।
यः स्वानुभूतिफलदं भक्तियोगमुपादिशत् ॥ ५२ ॥

मोक्षार्थमात्मनो येन लोकोद्धारस्य हेतवे ।
व्यतीतं जीवनं सर्वं परमार्थविवर्धने ॥ ५३ ॥

देवकार्यं हि कृत्वैवं देवस्य सदनं गतः ।
गुरुदेवो रामचन्द्रः सद्गुरुर्दैवमानवः ॥ ५४ ॥

चरितं गुरुदेवस्य पवित्रममृतोपमम् ।
गंगाजलसमं पुण्यं कैवल्यपदलब्धये ॥ ५५ ॥

गुरुदेवचरितं दिव्यं यः पठेत् श्रद्धया श्रुतः ।
सन्मार्गे तस्य जायेत रतिरत्र न संशयः ॥ ५६ ॥

परमार्थपरा बुद्धिर्भवेत्तस्य शनैः शनैः ।
संजायेताचला भक्तिर्नामस्मरणसाधने ॥ ५७ ॥

आत्मदर्शनमापाद्य जीवन्मुक्तिं स आप्नुयात् ।
निजानन्दोपलब्धिं च या काष्ठा या परागतिः ॥ ५८ ॥

पठेदिदं यश्चरितं मनोज्ञम्
शुभं परं स्फूर्तिदं श्रद्धयैव ।
स भक्तिमापाद्य सुखं च शान्तिम्
भवेत् कृतार्थः खलु जीवने स्वे ॥ ५९ ॥

इति वामनविरचिते श्रीगुरुदेवकथामृते महानिर्वाणं नाम पञ्चदशस्तरङ्गः ।

# षोडशस्तरङ्गः

पीठमध्यात्मविद्यायाः काडसिद्धेश्वराभिधम् ।
आद्यः संस्थापकोऽस्यास्ति निंबर्गीशो महेश्वरः ॥ १ ॥

उमदीशः कुलगुरुः पद्मसिद्धो महाप्रभुः ।
उपकुलगुरुश्चास्य निंबाळेशो महात्मविद् ॥ २ ॥

शिवलिंगव्वाम्बुरायगिरिमल्लेश्वरादिकाः ।
महान्तः साधकाश्चास्य पद्मसिद्धाः सभासदः ॥ ३ ॥

स्वरूपसंप्रदायोऽयं नामस्मरणसाधनात् ।
आत्मस्वरूपेऽवस्थानं परमं ध्येयमुच्यते ॥ ४ ॥

समन्वयो वारकरी-समर्थसंप्रदाययोः ।
तथा राजध्यानयोगमिलनं चात्र विद्यते ॥ ५ ॥

अस्ति प्रमाणग्रन्थोऽस्य संप्रदायस्य संमतः ।
ग्रन्थराजो दासबोधो रामदासेन निर्मितः ॥ ६ ॥

तस्मिन्नपि समासा ये परमार्थनिरूपकाः ।
ते विशेषेण पठ्यन्ते व्याख्यायन्ते च सूरिभिः ॥ ७ ॥

ग्रन्थास्तथा वारकरीसंप्रदायस्य निर्मिताः ।
मान्या ज्ञानेश्वरतुकानाथनामादिसाधुभिः ॥ ८ ॥

मुख्यास्तुमाससप्ताहाः सन्ति श्रावणपौषयोः ।
अन्येऽपि लघुसप्ताहा मासे चैत्रे च कार्तिके ॥ ९ ॥

ज्ञानेश्वरीदासबोधग्रन्थयोः क्रियते तथा ।
ग्रन्थस्य 'भक्तविजय' स्यापि पारायणं किल ॥ १० ॥

त्रिकालं भजनं चैव संप्रदायस्य संमतम् ।
पठनं दासबोधस्य स्वल्पमप्येव प्रत्यहम् ॥ ११ ॥

यावच्छक्यो नामजप एकैकं चेतरैः सह ।
अहोरात्रिकं चास्ति साधकस्य दिनक्रमः ॥ १२ ॥

गुरुमुखस्तु मार्गोऽयं सद्गुरुर्दैवतं परम् ।
नाम सद्गुरुणा दत्तं बीजनामेति कथ्यते ॥ १३ ॥

श्वासोच्छ्वासेषु मनसा जपस्तस्योत्तमः स्मृतः ।
भवेत्तेनचात्मलाभः कैवल्यं तु यदुच्यते ॥ १४ ॥

आनीतं नाम तत् स्वर्गात्त्रिवर्गीप्रभुणा किल ।
तस्योक्तमेवं माहात्म्यं संप्रदायस्य सूरिभिः ॥ १५ ॥

संप्रदाये 'नेम'शब्दो नामस्मरणवाचकः ।
पठनं दासबोधस्य 'पोथीवाचन' मुच्यते ॥ १६ ॥

सामूहिको नामजपः सत्सङ्ग इति वै स्मृतः ।
कटिबद्धो जपो नाम्नः 'कट्ट' शब्देन सूच्यते ॥ १७ ॥

साधनार्थं ग्रन्थपारायणाय भजनाय च ।
निश्चितो दिनसंभारः 'सप्ताह' इति वर्ण्यते ॥ १८ ॥

अखिलस्यापि विश्वस्य परमार्थपरायणाः ।
संप्रदाये सन्ति पूज्यास्तत्त्वज्ञा आत्मदर्शिनः ॥ १९ ॥

न देशवर्णजातीनां न धर्मस्यापि बन्धनम् ।
निकषः परमार्थस्य संप्रदायेऽस्ति केवलः ॥ २० ॥

स्वात्मानुभूतयः प्रोक्ता भिन्नभाषासु यद्यपि ।
दृश्यते तासु सादृश्यं जगतश्चात्मदर्शिनाम् ॥ २१ ॥

देव एको धर्म एको भूरेका चात्मदर्शिनाम् ।
वदन्ति बहुधा विप्रा एकं सत् सुन्दरं शिवम् ॥ २२ ॥

श्रेष्ठानां संप्रदायस्य निश्चितं मतमुत्तमम् ।
अतस्तु संप्रदायोऽयं सर्वस्पर्शी सनातनः ॥ २३ ॥

तत्त्वानि संप्रदायस्य सारभूतानि यानि वै ।
तानि संक्षेपेण वक्तुं यतिष्येऽहं यथामति ॥ २४ ॥

यदा स्वरूपेऽवस्थानं सदा भवति निश्चलम् ।
तदा स साधकः 'स्वस्थः' स्वास्थ्यं तेनैव चार्जितम् ॥ २५ ॥

नाम तस्यैवात्मलाभो नापरो विद्यतेऽधिकः ।
निसर्गाशेन संप्रोक्ता जीवस्य परमा गतिः ॥ २६ ॥

दर्शनं ब्रह्मसंस्पर्शः प्रभुसंभाषणं तथा ।
आत्मनैवात्मसंवादः भूमिकाश्च परात्पराः ॥ २७ ॥

एकाग्रनामस्मरणात् यदारोहति साधकः ।
तथैकान्तिकया भक्त्या सिद्धारूढत्वमाप्नुयात् ॥ २८ ॥

देहवृन्दावने चक्रवेणोर्नामप्रघुष्यनिम् ।
प्राणेष्वापूर्य गच्छेत्तु मुरल्या मुरलीधरम् ॥ २९ ॥

परकान्तां परद्रव्यं वर्जयेन्नामधारकः ।
सूरिभिः संप्रदायस्य साग्रहेणोपदिश्यते ॥ ३० ॥

न विरोधोऽद्वैतभक्त्योर्विद्यते परमार्थतः ।
स्वस्वरूपानुसन्धानं प्रधानं भक्तिलक्षणम् ॥ ३१ ॥

सामरस्ये तु संजाते जीवात्मपरमात्मनोः ।
भक्त्यर्थं कल्पितं द्वैतमद्वैतादपि सुन्दरम् ॥ ३२ ॥

ज्ञानिनां या स्वसंवित्तिः शैवानां शक्तिरेव या ।
देवभक्तैक्योत्तरा सा पराभक्तिर्निगद्यते ॥ ३३ ॥

भक्तिर्ज्ञानोत्तरा यापि पुरुषार्थस्तु पञ्चमः ।
अद्वैतभक्तिरपि सा भक्त्याचार्यैर्निरूप्यते ॥ ३४ ॥

पराभक्तेस्तत्त्वमिदं गीताभागवतादिषु ।
प्रोक्तं यत् संमतं तत्तु संप्रदायस्य सूरिणाम् ॥ ३५ ॥

भक्तिर्हि मूलं ज्ञानस्य भक्तेर्मूलं विरक्तता ।
स्मरणं हि परब्रह्म विस्मरस्तु भवभ्रमः ॥ ३६ ॥

उमदीक्षोपदेशस्य चतुःसूत्री भवेदियम् ।
सारभूता महावाक्यसदृशी प्रत्ययात्मका ॥ ३७ ॥

विवेकजो नीतिमुख्यो नामस्मृत्येकसाधनः ।
आत्मानुभूतिफलदो राजयोगसमन्वितः ॥ ३८ ॥

कथितो गुरुदेवेन भक्तियोगस्तु सूत्रतः ।
संप्रदायस्य तत्त्वानां प्रदीपः पञ्चलक्षणः ॥ ३९ ॥

आत्मज्ञानं सिद्धिभिः सर्वथैव
ह्यस्त्यस्पृष्टं सिद्धयश्चोपसर्गाः ।
मत्वेतिताभिर्न मुह्येत् कदाचि-
दासीदुक्तं संप्रदायस्य मुख्यैः ॥ ४० ॥

ये नादरूपादिकाः प्रत्ययास्तु
ध्याने समायान्ति च साधकानाम् ।
देवाप्तेः पथचिह्नानि तानि
श्रेष्ठा वदन्तीति सुनिश्चितानि ॥ ४१ ॥

दिव्यनाम्नो मन्दिरस्य रचितोऽस्य ह्यधस्तलः ।
निम्बर्गीशस्य शिष्येण झुमरीप्रभुणा किल ॥ ४२ ॥

अम्बुरायादिसङ्कल्पैर्विस्तारस्तस्य वै कृतः ।
निर्मितो गुरुदेवेन तत्कीर्तिगरुडध्वजः ॥ ४३ ॥

शिखरं मन्दिरस्यास्य निर्मितं नु कदा भवेत् ।
प्रभुरेव विजानाति केनैव च महात्मना ॥ ४४ ॥

इति वामनविरचिते श्रीगुरुदेवकथामृते संप्रदायस्वरूपकथनं
नाम षोडशस्तरङ्गः ।

( लेखकेन महाराष्ट्रभाषायां कृतस्य आरात्रिकस्य अयं संस्कृते अनुवादः )

# गुरुदेवस्यारात्रिकम्

जय देव जय देव । जय जय गुरुदेव । जय सद्गुरुराम ।
वन्दे करुणासिन्धो । त्वामात्माराम ॥ ध्रु ॥

जम्बुखिण्डीग्रामे कर्णाटकदेशे ।
रामेश्वरवरदानाद् धृतावतारस्त्वम् ॥
लब्ध्वा गुरूपदेशं कौमार्ये काले ।
प्राप्तोऽसि साधनात् त्वं मुक्तेरधिकारम् ॥ १ ॥ ध्रु ॥

गुरुलिंगजंगममहतां नवस्त्वमवतारः ।
उमदीशसद्गुरोस्त्वं प्रथितः शिष्यवरः ।
त्वं भक्तेराचार्यः ख्यातो मान्यवरः ।
साक्षात्कारस्य त्वं महाभाष्यकारः ॥ २ ॥ ध्रु ॥

त्वन्निंबाळस्थानं भक्तेः खलु तीर्थम् ।
परमार्थस्य च मन्दिरमध्यात्मपीठम् ॥
नाम्नो नेमस्य तथा तत्साधनहाटम् ।
भाति च भक्तजनेभ्यो भूतलवैकुण्ठम् ॥ ३ ॥ ध्रु ॥

भक्तेः फल्गुनदीं भो पुनश्च प्रकटयितुम् ।
जडजीवानुद्धर्तुं धारय ह्यवतारम् ॥
पूरय भक्तजनानामीप्सितमेतत्त्वम् ।
गुरुदेव प्रार्थयते लक्ष्मीसुत एवम् ॥ ४ ॥ ध्रु ॥

# टिप्पण्यः

( अधोनिर्दिष्टेषु अङ्कद्वयेषु प्रथमः अङ्कः तरङ्गनिदर्शकः द्वितीयश्च श्लोकनिदर्शकः । )

१. ५ **गोरक्षः**—नाथपन्थीयः योगिश्रेष्ठः साधुस्तथा कविश्च । एकादशशतके जातः इति ज्ञायते । मत्स्येन्द्रनाथस्य शिष्यवरः ।

१. ५ **काडसिद्धेश्वरः**—कोल्हापूरसमीपे सिद्धगिरीनामकः एको ग्रामः । अष्टादशशतके तत्रस्थो महान् आत्मदर्शी साधुः । निंबर्गी सम्प्रदायस्य जनकस्य निंबर्गीमहाराजस्य सद्गुरुः ।

१. ६ **ज्ञानेश्वरः**—महाराष्ट्रभाषाकविकुलगुरुः । खैस्त्ये त्रयोदशशतके पुण्यपत्तनसमीपे आळंदीनाम्नि ग्रामे जातः । ज्ञानेश्वरीनाम्ना सर्वविख्यातस्य ग्रंथस्य कर्ता । आळंदीग्रामे तस्य समाधिः ।

१. ७ **निवृत्तिनाथः**—ज्ञानेश्वरस्य अग्रजः तथा तस्य सद्गुरुः । सः साधुश्रेष्ठः कविश्च ।

१. ७ **सोपानः**—ज्ञानेश्वरस्य अनुज-महान् साधुः कविश्च ।

१. ७ **मुक्ताबाई**—ज्ञानेश्वरस्य भगिनी तथा महाप्रसिद्धा साध्वी कवयित्री च ।

१. ७ **नामदेवः**—श्रीज्ञानेश्वरस्य समकालीनः महान् विठ्ठलभक्तः कविः ।

१. ७ **तुकारामः**—महाराष्ट्रे देहूग्रामे सप्तदशशतके जातः श्रीविठ्ठलभक्तश्रेष्ठः । महाराष्ट्रीवाण्यां तेन रचिताः विपुलाः अभङ्गाः अतीव प्रसिद्धाः ।

१. ७ **एकाजनार्दनः**—षोडशशतके प्रतिष्ठानपुरे जातः साधुश्रेष्ठः । एकनाथः इति तस्य सपूर्णं नाम । जनार्दन इति तस्य सद्गुरोर्नाम । नाथभागवतम् भावार्थ रामायणम् इति तस्य विद्वन्मान्यौ काव्यग्रन्थौ ।

१. ८ **रामदासः**—खैस्त्ये सप्तदशशतके महाराष्ट्रे जातः प्रख्यातः साधुः । शिवभूपस्य स सद्गुरुः । दासबोधः इति तस्य विख्यातो ग्रन्थराजः । सज्जनगडे तस्य समाधिः ।

२. १० **नरगुन्दः**—म्हैसूरराज्यस्य धारवाड जिल्हायां एको ग्रामः । पुरा नरगुन्द नामकसंस्थानस्य मुख्यपुरम् ।

२. १० **सावनूरः**—म्हैसूरराज्यस्य धारवाड जिल्हायां एको ग्रामः । सावनूरनामकसंस्थानस्य राजधानी ।

२. १२ **रामदुर्गः**—म्हैसूर राज्यस्य बेळगावजिल्हायां एको ग्राम रामदुर्गनामकस्य संस्थानस्य राजधानी ।

१. १३ मुरगोड—मैसूरराज्यस्य बेळगावजिल्हायां एको ग्रामः ।
१. १५ गोखले—बापू गोखलेनाम द्वितीयबाजीरावपेशवायाः विख्यातः
सेनापतिः ।
२. १५ टिपू सुलतानः—अष्टादशशतके मैसूरप्रान्तस्य शासकः ।
२. १८ आकाशचिदम्बरम्—चिदम्बरनामकं मद्रासराज्ये स्थितम् बहु-
प्राचीनं प्रसिद्धं शिवक्षेत्रम् । आकाशचिदम्बरमपि संबोध्यते तत् ।
२. २२ गोणागरः—रामदुर्गसमीपस्थः एको ग्रामः ।
२. २७ बाजीरावः द्वितीयकः—पेशवा इति मुख्यमन्त्रिपदधारी द्वितीयो
बाजीरावः ।
२. २७ ब्रह्मावर्तपुरम्—मध्यप्रदेशे स्थितं प्रसिद्धं क्षेत्रम् ।
२. ३७ मामलेदारपदम्—'तालुका' विषयस्य अधिकारिणः पदम् ।
२. ३७ कुंदगोळः—मैसूरराज्ये धारवाडजिल्हायाः एको ग्रामः । पुरा स.
जम्बुखिण्डीसंस्थानस्य एको विभागः आसीत् ।
३. ७ काडसिद्धेश्वरः—क्रिस्ते षोडशशतके जातः लिंगायतमतस्य महान्
साधुः ।
३. ७ अजमीरः—क्रिस्ताब्दे षोडशे शतके जम्बुखिण्ड्यां जातः इस्लाम-
धर्मीयो महान् साधुः ।
३. ७ सदानन्दः—क्रिस्ताब्दे सप्तदशशतके जम्बुखिण्ड्यां जातः महान्
साधुः ।
३. ८ रन्नः—दशमे शतके जातः कन्नडसाहित्यस्य विख्यातः कवि ।
३. १७ चेदाद्रिः—जम्बुखिण्डीसमीपस्य मलयगिरेः अपरं नाम ।
३. २३ प्रसाद्—प्रासादः इति वाच्यम् ।
३. २४ हुबळीपुरम्—मैसूरराज्ये सुप्रसिद्धं नगरम् ।
३. ३२ हरभट्टः—पटवर्धनसंस्थानिकानां पूर्वजः महान् तपोनिष्ठश्च ।
३. ३९ करंजादेवी—कोङ्कणदेशे कोतवडे नामकस्य ग्रामे इयं प्रसिद्धा देवी ।
४. ९ खिस्तवर्षे हि शून्यर्तुतुरंगवसुधामिते—१७६० खिस्ताब्दे ।
४. ४२ खिस्तवर्षे कालवेददिग्पालवसुधामिते—१८४३ खिस्ताब्दे ।
४. ५३ जिगजिणी—मैसूरराज्यस्य विजापूरजिल्हायाः एकः ग्रामः ।
४. ५३ हिंचगेरी—मैसूरराज्यस्य विजापूरजिल्हायाः एक. ग्रामः ।
४. ५५ अक्कमहादेवी—वीरशैवसंप्रदायस्य विख्याता साध्वी ।

४. ५५ मीराबाई—गुर्जरदेशस्य विख्याता साध्वी, कवयित्री च ।
४. ५८ चिमडः—विजापूर जिल्हायाः एको ग्रामः ।
४. ६९ निंबाळः—विजापूर जिल्हायाः एको ग्रामः ।
४. ६९ जतम्—विजापूर जिल्हायाः एको ग्रामः ।
५. २२ कुरुन्दवाडः—कोल्हापूरजिल्हायाः एको ग्रामः । पुरा कुरुंदवाडसंस्थानस्य राजधानी ।
७. ५ विश्वस्य मध्यबिन्द्वाख्यः—Centre of the Universe.
७. १५ लागवणकरः—पुणेपुर्याः भिषग्वरः ।
आण्णासाहेबः पटवर्धनः—पुणेपुरस्थः महर्षिरित्युपाधिना युक्तः पुरुषश्रेष्ठः ।
७. ३१ गोडे—पुणेपुर्यां पी. के. गोडे नाम्ना प्राच्यविद्यासंशोधकः प्राध्यापकः।
८. ६ डेक्कनशिक्षणसंस्थायाः—Deccan Education Society, Poona.
८. ११ विभूतिश्च विभूत्यर्चा—Hero & Hero worship इति आङ्ग्लनाम ।
८. १३ लक्षणानि—विशेषाश्च कालस्य–Signs and Characteristics of times. इति कार्लाइलस्य प्रसिद्धः ग्रन्थः । तस्य
८. २६ बंगलूरम्—म्हैसूरराज्यस्य राजधानी ।
८. २८ बटोद्रनरेशेण—बडोदाख्यस्य संस्थानस्य अधिपेन 'सयाजीराव गायकवाड' इति संज्ञितेन ।
८. ४५ विजरी—बडोदानगरे तत्वज्ञानस्य प्राध्यापकः ।
८. ४६ 'माईंड'—इंग्लन्दे प्रकाशितं मासिकम् ।
८. ४७ भाण्डारकरः—डॉ. रामकृष्ण गोपाळ भाण्डारकरः । पुण्यपुरे अतीव विख्यातः गीर्वाणभाषापण्डितः प्राच्यविद्यासंशोधकप्रवरः ।
८. ६१ प्राच्यविद्यामन्दिरम्—Bhandarkar Oriental Research Institute in Poona.
९. २४ यडौंले—विजापूर जिल्हायाः एको ग्रामः । तस्मिन् ।
९. २६ झरथुष्ट्रः—पारसीकधर्मसंस्थापकः ।
१०. २ इस्लामपुरे—महाराष्ट्रदेशे ग्राम. । तस्मिन्

११. ८ राधाकृष्णः—विश्वख्यातः तत्त्वज्ञ. महापण्डितः। भूतपूर्वः भारतस्य राष्ट्रपतिः।

„ जयकरः—मुकुन्द रामचंद्र जयकर इतिनाम्ना मुम्बय्याः विख्यातः प्राड्विवाकः तथा वक्ता च। पुणेविश्वविद्यालयस्य भूतपूर्व उपकुलगुरुः।

„ झा—गंगानाथ झा इति नाम्ना अल्लाहाबादविश्वविद्यालयस्य उपकुलगुरुः।

„ औंधभूपतिः—महाराष्ट्र देशे औंधनामकं संस्थानमासीत्। तस्य संस्थानस्य भूपः।

„ बेलवलकरः—श्रीधर कृष्ण बेलवलकर इति नाम्ना डेक्कन कॉलेजस्य सुप्रसिद्धः प्राध्यापकः गीर्वाणभाषापण्डितः प्राच्यविद्यासंशोधकश्च।

११. २१ वचनामृतानि—ज्ञानेश्वरवचनामृतम्, सतवचनामृतम् तुकाराम वचनामृतम् रामदासवचनामृतम् इति गुरुदेवेन प्रकाशिताश्चत्वार ग्रन्थाः।

११. २२ उपनिषद्तत्त्वविद्याविधायकसमीक्षणम्—इति वाच्यम् Constructive Survey of the Philosophy of the Upanishads इति नाम्ना गुरुदेवस्य सुविख्यातः ग्रन्थः।

११. २३ मॅक्डोनल्ड-कीथ-याकोबी-विंटरनिट्स-राप्सनादयः—यूरोपीयाः पण्डिताः।

११. २५ रॉलिन्सन—यूरोपीयः पण्डितः।

११. २६ डायसन्—Philosophy of the Upanishads इति विख्यातग्रन्थस्य जार्मण्यदेशीयः लेखकः।

११. २७ झिमर्मन—यूरोपीयः पण्डितः।

१२. १० साक्षात्कारपथो महाराष्ट्रेऽभिधः—Mysticism in Maharashtra इति गुरुदेवस्य प्रसिद्धः ग्रन्थः।

१२. १० ऋतुवेदमहधरासंमिते ख्रिस्तवत्सरे—१९४६ खिस्ताब्दे

१२. १२ डी. लिट्—Doctor of Literature इति नाम्ना पदवी।

१२. १३ 'सर्वां मान्य' इति पदव्या—Emeritus Professor इति आङ्ग्लभाषायाम्।

१२. १५ ऋतुवेदमहधरासंमिते—१९४७ खिस्ताब्दे।
कर्णावतीपुरे—अहमदाबादनाम्ना प्रसिद्धे पुरे।

१३. १९ महात्मागांधिजीहिन्दीभक्ताध्यात्मिकधारणा-Conception of Spirituality in Mahatma Gandhi & other Hindi saints.

१३. २० शुक्लो देवीप्रसादाख्यः—गुरुदेवस्य सुहृद्वरः प्रयागस्थः पण्डितः । भक्तश्च ।

१३. २९ सोपानं परमार्थस्य—परमार्थसोपानः इति गुरुदेवस्य ग्रन्थः ।

१३. ३६ हिन्दी सारस्वते देवप्राप्तिमार्गाभिधः—Pathway to God in Hindi literature. इति गुरुदेवस्य सुविख्यातः ग्रन्थः ।

१३. ४३ ईशावाप्तिपथः श्रीमद्भगवद्गीतासु पुस्तकम्—Pathway to God Realisation in Bhagavadgita. इति गुरुदेवस्य ग्रन्थः ।

१३. ४९ ऑटोगार्थफार्कुआर—एते त्रयो युरोपीयाः पण्डिताः ।

१३. ६१ कर्णाटवाङ्मये देवप्राप्तेर्मार्गाभिधः—Pathway to God in Kannad Literature. इति नाम्ना गुरुदेवस्य ग्रन्थः

१४. १२ कयटगी सौंदी—द्वावपि जम्बुखिण्डीस्थौ शालाशिक्षकौ ।

१४. २३ ऋत्वसुग्रहभूमिते—१९५६ ख्रिस्ताब्दे

१४. ४५ माटे—स. मा. माटे इति फर्ग्युसने प्राध्यापकः प्रसिद्धो लेखकश्च ।
रंगनाथ दिवाकरः—कर्णाटकस्य देशभक्तस्तथा संयुक्तकर्णाटक-नाम कन्नडदैनिकस्य संपादकः विख्यातः कन्नडलेखकः भूतकालीनः केन्द्रमन्त्रिपदधरः ।

१४. ४६ ग्रन्थस्तस्य निबन्धानाम्—Philosophical and other essays नाम गुरुदेवस्य ग्रन्थः

१४. ४८ सततारानिवासिना-महाराष्ट्रदेशे सातारानामकस्थाने निवासिना ।
शालजोडी—उर्णावस्त्रम् ।

१५. ४ धारवाडपुरम्—कर्णाटके सुप्रसिध्द पुरम् । कर्णाटक विश्वविद्यालयस्य स्थानम् ।
गदगम्—धारवाड जिल्हायां प्रसिद्ध उद्यमनगरम् ।

१५. ७ हयासुरसभूमिते—१९५७ ख्रिस्ताब्दे ।

१५. २९ मन्दिरं परमार्थस्य—परमार्थमन्दिरनाम ग्रन्थस्य ।

१६. ५ वारकरीसमर्थसम्प्रदाययोः—वारकरीनाम्ना महाराष्ट्रेऽतिख्यातः विठ्ठलभक्तिसंप्रदायः । पण्ढरपुर तस्य प्रमुखं स्थानम् । समर्थ संप्रदायस्तु रामदासस्य संप्रदायः ।